अथ भगवानरविन्दलोचनो भवभयमोचनो नतजनाभीष्टदानपरायणो नारायणो निरुपमकरुणः कमलारमणः श्रीवैकुण्ठनगरीशिरोमणिरमणीयं शातकुम्भस्तम्भसहस्रसंभावनीयं श्रीमन्महामणिमण्डपाभिधानमानन्दमयमास्थानमधिष्ठाय भुजंगपुंगवोत्संगभुवि सुखोपविष्टः प्रहृष्टमना नित्यसूरिपरिषत्परिचर्यमाणचरणनलिनयुगलोऽपि बहुलविजृम्भितं भूमितले कलिबलकलिताशेषशेमुषीप्रमोषवेदमार्गविदूषकमृषावाद्याविष्कृतविविधदन्धननिबन्धननिबन्धनमाकुलीभावं पारिषदकर्णपरंपरासमागतं सैन्यधुरीणेन साधु समावेदितं कर्णपथाध्वनीनं विधाय न कश्चिदपि विपश्चिदिह चिरायागच्छतीति निश्चित्य कथंताचिन्तासंतानसंतापदन्तुरान्तःकरणो दूरीकृताखिललीलोपकरण एकाकीवारमम्माणस्त्वरमाणः स्वेन वितीर्णे शास्त्रप्रदीपे शलभायमानान् भूयो भूयो भवचङ्क्रमणेनाभिभूयमानान्निरपायापवर्गोपायसंपन्निलिम्पसरिदवतारैः स्वावतारैरपि तारयितुमशक्यान् दृढघटितपापपाशशिक्यानतिविरुद्धस्वभावान् जीवानुज्जीवयितुं सज्जीभूतो दीपकभृगविन्यासन्यायसरण्या धरण्यामशेषशेषवृत्तिनिर्वर्तनोचितरचितविविधवेषमात्मनिर्विशेषं जीवविशेषं शेषमवतारयिष्यन्नपहसितसुधावेणीं वाणीमित्थमभाणीत्—

श्रीमन्महाभूतपुरीनिवासी
हारीतवंशार्णवकल्पशाखी ।
यज्वा महान् केशवसोमयाजी
भाग्योत्तरो ब्रह्मविदाविरस्ति ॥ ८६ ॥

सोऽयमिदानीं सत्यव्रताभ्यधिकभूम्नि श्रीमत्कैरविणीसीम्नि पर्वकालेषु प्रणतजनाभीष्टदानसंकल्पमाचरन्तमिव प्राचीनाम्भोधेस्तटभुवमधिवसन्तं पार्थसारथ्यवेषवन्तं भगवन्तं भजमानो यजमानो घटितदेवतातुष्टिं कलिताखिलजनाभिमतपुष्टिं पुत्रीयामिष्टिमनुतिष्ठति। अनन्त, त्वमेवानन्तायामनन्तकुदृग्वञ्चनसंतानदन्तुरायामनन्तारमपि मम नन्तारं विधातुं प्रभवसि । यतः सुदर्शनो न सुदर्शनं पालयितुं प्रगल्भते । विनतानन्दनो न विनतानन्दनचातुरीमञ्चति । विष्वक्सेनो न विष्वक् सेनां चालयितुं शक्नोति । दरो न दरमपा-

कर्तुमार्तानां दरमपि क्षमते । कुमुदो न कुमुदमाधातुमर्हति । कालो न कालमनुकूलयितुमीष्टे । तदधुना निष्ठया गरिष्ठया परमेष्ठिपुत्रीयतः पुत्रीयतस्तस्य पुत्रीभूय पवित्रीकृतधरित्रीमण्डल आजानसिद्धं क्षमाभरणमधस्तादिवोपरिष्टादपि प्रथयन् कुण्डलीकरणचातुरीं मतान्तरेषु प्रकटयन् प्रतिकथकयशःक्षीरमाकण्ठमापिबन् कलिप्राणानिलं कबलयन् प्रतिक्षिप्तप्रतिपक्षोद्धतिः प्रतिष्ठापितविशिष्टाद्वैतसिद्धान्तपद्धतिर्मम च तस्य च मनोरथं पूरयित्वा यथापुरं मत्पुरमेत्य मां परिचर्यया परितोषयेति । किंच,

सजातीयः सोऽहं सुरनरतिरश्चां समभवं
प्रयासो मेऽगच्छन्नलवनसमासेचनतुलाम् ।
मदीयं शेषित्वं दृढघटितयोगं विरचयन्
निगूढं शेष त्वं प्रकटय नृशेषत्वमवनौ ॥ ८७ ॥

अथ चक्षुःश्रवश्चक्रवर्ती लक्ष्मीसहचरस्य भ्रुवोर्गिरां च विलासं युगपदेवाक्ष्णां सहस्रेणालोकयन्नाकर्णयंस्तद्विरहासहिष्णुरपि रामानुजत्वेऽप्यननुभूतं भरतैकान्तिकं पारतन्त्र्यसाम्राज्यं प्राज्यमङ्गीकृत्य तच्छासनं शिरोमाणिक्यपालिकामालिकासहासिकया संभावयन् ससंभ्रममदभ्रमामोदभरमाबिभ्राणः कल्याणगुणरत्नखनिदर्याः केशवार्यकृशोदर्याः कुदृष्टिसंक्षोभणसंज्वरसंपीडनसंजनितसंजीवनविरतीनां कृतकेतरभारतीनां च गर्भभुवं स्वपदार्पणेन प्रसाधयितुं संकल्पमकल्पयत् ।

अथ भगवानपारकृपासारनीरधिः पार्थसारथिः स्ववदनकमलपरिमलसुरभिलमभिनवनवनीतकोमलमवतरिष्यद्भाष्यकारवाङ्मयमाधुरीसाधुरीतिपरीक्षोदाहरणमाकलिताखिलमोदाहरणं परिहसित सुधारसं पायसं पुत्रीयतेऽस्मै प्राहिणोत् ।

पायसं भगवद्दत्तं निधानमिव निर्धनः ।
शिरसा प्रतिजग्राह सानन्दं केशवाध्वरी ॥ ८८ ॥

अनन्तरमवशिष्टमिव स्वपीतानन्दामृतरसस्य स्वातीवर्षाम्भ इवोत्पत्स्यमानबालकमुक्ताफलस्य जीवनौषधमिव कलिकालदन्दशूक-

दृष्टजीवजातस्य तत् पायसमादाय मुदायमुदारधीः पाययामास प्रश्रयश्रेयसीं प्रेयसीम् ।

पार्थसारथिकृपापरिवाह-
क्षीरवारिधिसुधारसकल्पम् ।
तन्निपीय नितरां मुमुदे सा
केशवाध्वरिधुरीणमृगाक्षी ॥ ८९ ॥

अथ दशरथ इव परिपूर्णमनोरथो वधूसहितः पार्थसारथिप्रसादमहिमसमाहितः पौरैर्बहुमतः सर्वभूतविरचितसंमतः श्रीमतीं महाभूतपुरीमयोध्यामिवाध्यास्य समेधमानमोदभरनिर्भरोऽभ्युदयमाकाङ्क्षन्नात्मजस्य सोऽयमगण्यपुण्यो यज्वनामग्रगण्यः कंचिदनेकहसमतिवाहयांचक्रे ।

अथ कस्मिंश्चिदहनि दुरितदूरीकरणाहंयुनि शुभंयुनि समाराधितभगवद्भक्तसमष्टिः समधिगततुष्टिः समालोकितकेशवपदकमलः सद्वृत्तविमलः सर्वक्रतुदीक्षितप्रथाधारी केशवाध्वरी भगवदनुग्रहमहार्घरत्नसंभवखन्यां रजन्यां समाचरितसायंतननियमः सत्कथासुधास्वादनसार्थकीकृतपूर्वयामः तारामौक्तिकदन्तुरगगनफलककपटदर्पोद्भटकन्दर्पमहाभटविशङ्कटखेटवलयान्तरालालंकारस्थूलमुक्ताफलप्रकाण्डकान्तिमण्डलभृति शशभृति, अतिबहुलमलयजधूमस्तोममघुमघुमितदिगन्तराले, अविरलपरिमलमिलदलिपटलवितानविलम्बितमल्लिकादिनानाविधकुसुमजाले गार्हस्थ्यधर्मपादचतुष्टयसंनिभशातकुम्भचतुःस्तम्भशोभिनि कीर्तिमयक्षौमार्पणप्रेमभरसमायातचतुर्दिशाशाङ्काकरकाञ्चनपाञ्चालिकाकरधृतकरदीपिकोद्भासिनि विहसितविश्वकर्मशिल्पकल्पनाचतुरिमसंनिवेशलसमाने वैमानिकविमानसमाने कमलगर्भाकारे गर्भागारे वसिष्ठ इवारुन्धत्या अगस्त्य इव लोपामुद्रया चञ्चलदृशा साकं हंसतूलिकापर्यङ्कसमञ्चितं मणिमञ्चमञ्चन् क्षीराम्भोधितरङ्गशीकरनिकरतारकिततया घनाघनश्यामलतया च तारापथकान्तिवपुषं शयनीकृतशेषवपुषं जगद्रक्षणजागरूक-

निद्राजुषं मधुद्विषं निजमानसजङ्गमश्रीविमाने विधाय निद्रामुद्रारस-मनुभवितुमारेभे । तदनु सा च निद्रा यवीयसीव प्रेयसी विप्रलम्भ-विलासेनेव पिहितलोचना विगतालोचना तं सविस्रम्भं परिरेभे ।

दिव्यं चक्षुर्दातुकामः स्वकीयं
तद्दृर्दर्शी विग्रहं दर्शयिष्यन् ।
निद्रामुद्रामुद्रितं मांसचक्षु-
र्द्वन्द्वं चक्रे द्वन्द्वभूमा मुकुन्दः ॥ ९० ॥

आविर्भविष्यति विधावचिरात् प्रसन्ने
लोकान्तरालतिमिरोद्दलनप्रवीणे ।
वेदोक्तकर्मविधिपण्डितपुण्डरीक-
दृक्पुण्डरीकयुगली मुकुलीबभूव ॥ ९१ ॥

स्वनामभरणादिव प्रणयसारमुज्जृम्भय-
न्नपारकरुणानिधिः प्रकटपाटवः केशवः ।
अविन्ददरविन्ददृक् तदनु मन्दिरं सुन्दरं
महीसुरशिरोमणेर्महितसद्गुणोद्यद्घृणेः ॥ ९२ ॥

अनन्तरमयं यज्वनामग्रणीरखण्डसाम्राज्यलक्ष्मीकेलिशैलायितरत्नकिरीटोज्ज्वलमौलिम्, अखिलदिगन्तरनिरन्तरंविसृमरपरिमलभरनिर्भराभिहितस्वाभ्यागमबाहाभ्यन्तरविलोलाभ्यर्हिततुलसीदाम-स्तोममधुमत्तमधुव्रतव्रातजेगीयमाननिजभुजपराक्रमबिरुदपद्यावलिम्, आखण्डलशिलाखण्डाखर्वगर्वखण्डनपाण्डितीभासुरकलेबरकान्तिपूरसूरसुतानीरस्फारविकस्वरकमलाटवीपरिपाटीभृता महता विडम्बितविद्युदाडम्बरेण पीताम्बरेण परिशोभितकटीतटीकं, निजकरावलम्बितपाणिकमलकमलवासिनीवसुन्धरावधूटीकं, पादाम्भोजपरिष्कृतपदत्राणं, स्मितचन्द्रिकालहरीभिः परिधूतबाह्याबाह्यान्धतमससमुदयं, समधिकदयम्, आगलप्रेमशीतलैराननेन्दुमण्डलामृततटाकतरङ्गकोमलैराविष्कृतान्तरङ्गैरपाङ्गैरभिषिञ्चन्तम्, आश्रितानमुञ्चन्तं, भगवन्तं केशवं तमद्राक्षीत् ।

तदनु विस्मयप्रमोदार्णवतरङ्गपरम्पराहमहमिकासमाकर्षणतरल-हृदयपुण्डरीकः सकलमङ्गलागमोद्गमारामान् प्रणामान् क्रियासमभि-हारेण समारचय्य क्षणं तूष्णीं भवन्,

विगाह्य विमलाशयं विपुलमब्जचक्रोज्ज्वलं
प्रसन्नमतिकोमलं बहुलशीतलं श्यामलम् ।
क्षमासुरभिलं लसद्घनरसं तटाकोत्तमं
श्रमापनयनक्षमं सकमलं ननन्दाध्वरी ॥ ९३ ॥

अथ भगवाननुकम्पापरीवाहसहोदरैः सादरैः प्रेमसारैः कटाक्षा-मृतपूरैः पुत्त्रवदग्रेसरसाम्राज्यपदे तमभिषिञ्चन् गम्भीरया सुधाकिर-गिरा आनन्दसागरान्तर्निमज्जयन्ननपत्यताशोकसागरादुन्मज्जयन्नित्थ-मुदीरयामास—

लिहन् कलिबलानिलं कबलयन् पयो मायिनां
यशःप्रकृतिकुण्डलीकरणमन्यपक्षेऽर्पयन् ।
मदञ्जनमुदञ्चयन् प्रकटयञ्श्रियं वैष्णवीं
भविष्यति फणाभृतां परिवृढः सुतस्ते मखिन् ॥ ९४ ॥

इत्युक्त्वा भगवान् वेगाज्जगाम निजमन्दिरम् ।
निद्रा विजघटेऽमुष्य तमसा सह तत्क्षणम् ॥ ९५ ॥

ध्यायंध्यायं केशवं मेघकल्पं
पायंपायं तद्वचः क्षीरदेश्यम् ।
सस्त्रीकोऽयं देवदेशीय आसी-
न्मत्वा हृष्टः सुप्रभातं ममेति ॥ ९६ ॥

अथ स्वमण्डलमण्डनायमानपुण्डरीकाक्षसमीरितं स्वेन दुर्नि-वारमाभ्यन्तरमन्धकारं निराकर्तुं रामानुजदिवाकरोऽवतरिष्यतीति वृत्तान्तमाकर्ण्याभ्यसूययेव कमप्यरुणिमानमाविभ्रति भगवति

भास्वति पूर्वोर्वीधरचूडामणिभावभृति निर्वर्तितनिखिलप्राभातिक-नियमः सहसा सह सार्थेन महतां किमयमेव मया स्वप्ने दृष्ट इति परीक्षमाण इव सप्रत्यभिज्ञमभिज्ञचूडामणिरभिवीक्ष्य केशवं तेन बहुमतो बहुलानन्दनिर्भरोऽधिष्ठाय कांचन काञ्चनसभामनितर-साधारणवैभवतनूभवसंभवोदन्तममृतमिव विबुधपरिषदं सकल-कलापरीक्षानिकषदृषदं पाययति स्म ।

सा च परिषत् समुन्मिलद्बहुलपुलकमुकुला धारालगलदानन्द-बाष्पजला गद्गदगला कमलावलिरिव मकरन्दधारां मन्दरमथ्यमान-क्षीराकूपारतरङ्गपालिरिवामृतलहरीं पादपपरम्परेव प्रसूनपारम्परीं गिरां धोरणीमित्थमुज्जृम्भयामास—चिरं जीव चिरन्तनसरस्वति, स्मृतिसंतान अविच्छिन्नसंतानतामनुभव, इतिहास साट्टहासः सुख-मास्स्व, पुराणगण सप्रमाणो धर्मं भण, व्याकरण साधुत्वव्याकरण-पारीणतां परिगृहाण, तर्क विघटितवितर्को वेदाननुगृहाण, मीमांसा-न्यायप्रपञ्च सन्मार्गसंचारचातुरीमञ्च, ब्रह्मसूत्र श्रुतियुवतिकण्ठ-मङ्गलसूत्रभावमवलम्बस्व, प्रबोध निराबाधो वर्तस्व, भगवद्भक्ते भव-भयभञ्जनशक्तिं भजस्व, वैकुण्ठ अकुण्ठसंचारो विजयस्व, कपिल ब्रह्मापलपनजीवन चापलेन पाताले पलायस्व, कणाद तृणादो भव, अक्षचरण रक्ष चरणविरक्तिम्, बाह्यागमकलाप मा प्रलप, पाशुपत पत पर्वतप्रपातात्, पाषण्ड षण्डतामाढौकसे, चार्वाक निर्वाकोऽसि, बौद्ध वेदविरुद्धालाप जगदपलापबद्धकक्ष्यस्तर्कवन्ध्यां निरुद्धोऽसि, मृषावाद परिहृतभगवदनुभवामोद विषादमेदुरो दूयसे, निर्गुणवाद परिकलिताखिलप्रमाणापवाद प्राप्तापवादो विदीर्यसे । शङ्करः किंकर-भावमाटीकताम् । भास्करस्तस्कर इव पलायताम् । यादवो हृदयाटवी-निहितसंतापदवः परितप्यताम् । दण्डधरराजधानी दुर्वारदूर्वाभर-दुर्गममार्गवती जायताम् । श्रीरङ्गादिदिव्यदेशेषु श्रीवैष्णवश्रीसमृद्धि-रभिवर्धताम् । यदयमवतरिष्यति नित्यसूर्यग्रणीः फणिग्रामणीः कलिकालाहंकारान्धकारप्राग्भारनिराकरणतरणिर्भवाम्भोधिनिमज्ज-ज्जनोत्तारणतरणिर्विशदीकृतवैदिकसरणिः स्वपदार्पणपवित्रीकृत-धरणिः केशवाध्वरितनयः समधिगतनय इति ।

निमित्तस्वप्नाद्यैर्निखिलमहदाशीःफणितिभि-
र्नितान्तं संतुष्टो निधिमिव करस्थं तनुभवम् ।
निकामं निध्यायन्निरवधिकभूमा निरुपमो
निजागारं प्राप्तो निरुपधिसुखी केशवमखी ॥ १७ ॥

———

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्राज्यपट्टाभिषिक्त-कल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्रबन्धनिर्माणधुरीणश्रीमद्रा-मानुजदेशिकसार्वभौमचरणारविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्या-वैशद्येन तत्सागर्भ्यविभूषणब्रह्मर्षिचर्यभावनाचार्यविबुधवर्यतनूभवेन रामानुजदासेन विरचिते श्रीरामानुजचम्पूप्रबन्धे अवतारोपोद्घातो नाम प्रथमः स्तवकः ॥

———

अथ द्वितीयः स्तवकः

———

आरूढोऽथ कृपामयीं दृढतरां नावं स नारायणः
संसारार्णवमग्नचेतनवपुःशुक्तिस्थमुक्तामणीन् ।
आदातुं कुतुकेन नाविक इव श्रीकेशवार्याध्वरि-
प्रेयस्या जठरं निनाय पिठरं भोगीन्द्रमुख्यङ्गुणः ॥ १ ॥

श्रीकेशवार्याध्वरिधर्मपत्न्या
न्यधत्त गर्भे पदमेष भोगी ।
अनेकदुर्वादिदुरुक्तिदूनं
व्यधत्त गर्भे शिशिरं श्रुतीनाम् ॥ २ ॥

अनुश्रवशिखावधूचिकुरगर्भकालंकृतिं
विधातुमतिकौतुकान्निजवचःप्रसूनालिभिः ।
फणाधरधुरंधरो जगदलं कृती रक्षितुं
चकार हरिणेक्षणातिलकगर्भकालंकृतिम् ॥ ३ ॥

विश्वंभराभरं धीरमुत्तमाङ्गान्तरङ्गयोः ।
बभार चित्रमुदरे केशवार्यकृशोदरी ॥ ४ ॥

चिराय यां मूर्धनि सावधानं
बभार दर्वीकरसार्वभौमः ।
सा भूस्तमन्तर्वहतीति चित्रं
नात्राखिलः प्रत्युपकारकारी ॥ ५ ॥

गर्भगह्वरवसत्फणिराज-
श्वेतदीप्तिबहिरुद्गतियोगात् ।
पाण्डिमानमयते स्म वराङ्ग्या
गात्रयष्टिरमृतांशुकलेव ॥ ६ ॥

अधिगर्भभूमि वसतो मृगीदृशो
भुजगेश्वरस्य गलकालरेखिका ।
प्रतिबिम्बितेव वपुषोऽच्छभावतः
प्रकटीबभूव तनुरोमवल्लरी ॥ ७ ॥

अन्तर्वसत्फणिधुरीणफणेद्धरत्न-
दीपप्रभापटलजृम्भणवार्यमाणा ।
नाभीबिलात्कुचमहीधरदुर्गगन्त्री
रेखा रराज तमसामिव रोमराजिः ॥ ८ ॥

आविर्भविष्यदुरगाधिपपानयोग्य-
दिव्यामृताढ्यजतुमुद्रितरूप्यकुम्भौ ।
श्यामाभ्रलोज्ज्वलपयोधरकैतवेन
वक्षःस्थलीमधिगतौ नियतं मृगाक्ष्याः ॥ ९ ॥

श्रुतिस्मृतीनामुदरेषु संकटा-
न्यपाकरिष्यन्नधिपः फणाभृताम् ।
प्रविष्टमात्रो बत संकटं व्यधा-
च्छ्रुतिस्मृतित्राणपरोऽबलोदरे ॥ १० ॥

अर्भक इव गर्भस्थः परवस्तुपरं कुतूहलं बहलम् ।
याज्ञिकरमणी चक्रे चक्रे भूम्या यदस्ति तल्लेभे ॥ ११ ॥

उच्चावचानां निगमान्तवाचां
नीचोच्चभावं कलितं कुदृग्भिः ।
उच्चाटयिष्यन्निजमातृमध्ये
नीचोच्चभावं व्यधुनोत् त्रिवल्याः ॥ १२ ॥

गुणमयं कलयन्त्यवनीतलं
तनुभुवा परवस्त्वपि तादृशम् ।
विभवभागपि याज्ञिकभामिनी
गुणमयं वलयं करयोर्दधौ ॥ १३ ॥

सुपर्वमुक्ताफलकृत्समात्मजः
श्रुतिद्वयीभूषणमाहरिष्यति ।
इति ब्रुवन्त्या इव दौहृदश्रियै
वितीर्य सा हैममथान्यदाददे ॥ १४ ॥

गौराङ्ग्या गौरवं भेजे मध्यं सूक्ष्ममपि क्रमात् ।
लघुर्गुरुर्घनालम्बाद्भवतीति किमद्भुतम् ॥ १५ ॥

अहो कंचिद्बालं जठरपिठरान्तर्धृतवती
गतिं मन्दां भेजे युवतिरपि सा याज्ञिकसती ।
श्रुतिश्रेणी विश्वंभरभरणशीलापि जरती
गतिं कांचित् प्राप्ता जगति परमां राजतितमाम् ॥ १६ ॥

एवं परिणतगर्भा सा सतीजनशिरोऽलंकारमणिर्भगवत्संकल्पकल्पव्रततीव फलवती भवाभितप्तजनभाग्यविततिरिव सिद्धिमती गीर्वाणाधिपदिक्सरणिरिव भासुरतरणिः आकरधरणिरिवान्तर्गतमणिः त्रयीमूर्तिरिव स्वाभ्यन्तरंभासमाननारायणमूर्तिः वसुमतीव निधिमती, चन्द्रलेखेव चकोरस्य जलधरावलिरिव चातकस्य पद्माटवीव मधुकरस्य चन्द्रकिरणधोरणीव चक्रवाकस्य पत्युः कमपि परितोषं घटयांबभूव ।

दिक् प्राचीव पयोजिनीपरिबृढं तेजोनिधिं राघवं
कौसल्येव गुणाकरं भवभिदं कृष्णं यथा देवकी ।
भूदेवी जनयांबभूव तनयं भेत्तुं तमोमण्डलं
धर्मं धारयितुं नराहितमपाकर्तुं च पृथ्वीतले ॥ १७ ॥

सिद्धार्थशक्तिग्रहणे निदर्शनं
प्रदर्शनीयं शिशुना त्रयीगिराम् ।
पुत्रस्त इत्यादि वचोऽवकर्णयन्
प्रमाणयंस्तन्मुमुदे तदाध्वरी ॥ १८ ॥

आपूरि प्रियवक्तेव धनैर्हर्षैः स्वयं मखी ।
आनन्दवारि नावारि दृष्ट्योस्तेन यथा जनः ॥ १९ ॥

अपत्यमादित्यमिवाभ्युदीतं
तमोऽपहं केशवदीक्षितेन्द्रः ।
विलोक्य मज्जन् सरसीव मोदे
शुचीन् स वृद्धानभिराध्यति स्म ॥ २० ॥

स्नातोऽयं संवितीर्य श्रुतिवहलपरिष्कारमुद्यत्सुवर्णं
गोवृन्दं सद्गुणाढ्यं परमतिविततं चाम्बरं ब्राह्मणेभ्यः ।
कुर्वन्नानन्दसान्द्रं जगदखिलमयं मामको बालको द्रा-
गित्थं कर्तुं पटीयानिति घटितमतिर्हृष्टचेताश्चकाशे ॥ २१ ॥

यो जातमात्रो जगतां प्रदातुं
पूतत्वमुख्यान् सुगुणान् प्रगल्भः ।
तस्यापि पुत्रस्य मखी चकार
तान् दातुकामो बत जातकर्म ॥ २२ ॥

अथ पितामहपितामह इति महान्तं महिमानमाबिभ्राणः श्रीवेङ्कटाचलरमणचरणनलिनपरिचरणचातुरीधुरीणः शमदमप्रमुखनिखिलकल्याणगुणगणपरिपूर्णः श्रीशैलपूर्णो नाम देशिकचूडामणिराकर्ण्य कर्णामृतमद्भुतवैभवमात्मनो भागिनेयस्य संभवं भगवदभ्यनुज्ञया ससंभ्रममभ्यागत्य तमेनमाजानसिद्धभूमानं पञ्चसंस्कारसंपत्त्या शाणोत्तेजनयेव मणिं समुज्ज्वलद्घृणिं विधाय भगिन्याः पत्या महत्या बहुमत्या सुमत्यग्रणीरत्यादृतो निर्भरानन्दपूरितः स्वधाम प्रतिजगाम ।

शङ्खचक्रवरमण्डलमुद्रा-
शोभमानभुजशेखरशाली ।
बालको विरुरुचे स तदानीं
जातमात्र इव गोपकिशोरः ॥ २३ ॥

आजानसिद्धमिव शेषतयाभिलक्ष्यं
शुद्धोर्ध्वपुण्ड्रमदसीयललाटपट्टे ।
ऊर्ध्वं नयत्यतितरामयमत्युदार
इत्याततान हृदये मुदमङ्गभाजाम् ॥ २४ ॥

लक्ष्मणोऽयमिति लक्षणभाजो
रक्षणैकनिपुणस्य बुधानाम् ।
मेघनादमुखमायिविभङ्गं
कर्तुमीष्ट इति नाम कृतं किम् ॥ २५ ॥

कुसुममिव सुवर्णं सौरभेणाभिरामं
मणिवर इव कान्त्या शोभितो बालकोऽयम् ।
द्वयपरिमलभूत्या भूषितो भासते स्म
द्युमणिरिव निकामं तेजसा दुर्निरीक्षः ॥ २६ ॥

आराधनोचितमशेषजनस्य वक्त्र-
हस्तादिकं विधिकृतं विवरीतुकामः ।
आराधनाय नियतो मधुसूदनस्य
मौनव्रतं किमपि बिभ्रदिवाविरासीत् ॥ २७ ॥

आकर्णयन् भगवतो गुणकर्मनाम्नां
गानं वधूमणिकृतं मधुरं गभीरम् ।
डोलाधिरोहणमहोत्सवमञ्चितोऽयं
डोलायमान इव तद्रसपारवश्यात् ॥ २८ ॥

अथायमर्भकः स्वाविर्भावशीतलीकृताखिलजनगर्भको धवलपक्षक्षपाकर इव प्रतिक्षणमुपचीयमानतेजोनिचयकमनीयः कुहनाभीरडिम्भ इवाद्भुततराभिरूप्यसंभावनीयः विचित्राणि चित्राणि भूषणान्यमूल्यानि बाल्योचितानि रचितानि तत्तदनुबन्धबन्धुरया

बन्धुतया बिभ्राणो बालरसालसाल इव प्रकटितप्रवालाङ्कुरजालशाली पौराणामानन्दाब्धिपूरसमृद्धिं समुदश्चयन् प्रचकाशे ।

अकुण्ठं वैकुण्ठं विजहदिह तापार्ततनुभृ-
त्परित्राणोत्कण्ठी समजनि नृकण्ठीरव इति ।
विदित्वामुं बालं विरहचकितेवागतवती
हठात् किं पञ्चायुध्यभजत गलालंकृतिमिषात् ॥ २९ ॥

पुरुषव्याघ्रतामेष भरिष्यति न संशयः ।
इति व्याघ्रनखोपेतं विहितं कण्ठभूषणम् ॥ ३० ॥

अङ्गुलीयकमभात् करे शिशो-
र्हैमतामरसकर्णिकाकृति ।
वैदिकश्रियमयं भरिष्यती-
त्यर्पितं नियतमब्जचक्षुषा ॥ ३१ ॥

मोदकग्रहणकेलिनिबद्धं
मुष्टियुग्ममदसीयमवेक्ष्य ।
मोदकं कलिनिहन्तृ मुकुन्दो
हस्तयोः कटकयुग्ममदात्किम् ॥ ३२ ॥

श्रवणामृतमादरेण पातुं
श्रवणाभ्यां शठकोपसूरिसूक्तिम् ।
नयनश्रवणो नरोऽजनीह
ध्रुवमेते तदनर्घरत्नभाजी ॥ ३३ ॥

ललन्तिका मौक्तिककल्पितास्य
ललाटदेशे नितरां लसन्ती ।
लोकाभिरामार्भकसार्वभौम-
पट्टाभिषेकाम्बुकणावलीव ॥ ३४ ॥

तादृक्षबन्धक्षपणाभिलाषी
क्षोणीतले लक्ष्मणसूरिमूर्तिः ।
कटीतटे काश्चनसूत्रमाला-
मावेष्टय बद्धोऽजनि शेषभोगी ॥ ३५ ॥

घण्टावली कटितटे घटिताधिकाञ्चि
गम्भीरनादमुखरीकृतदिग्विभागा ।
उच्चाटनाय कलिदोषपिशाचपाल्याः
क्लृप्तेव तस्य दिशति स्म मुदं श्रुतीनाम् ॥ ३६ ॥

विमतमकुटकोटीन्यासधाटीभरोद्य-
द्विरुदकटकरावोज्जृम्भणारम्भशीलौ ।
विविधमणिविराजन्मञ्जुमञ्जीरशिञ्जा-
मुखरितहरिदन्तौ बालकाङ्घ्री व्यभाताम् ॥ ३७ ॥

कस्तूरिकागन्ध इवास्य भूमा
दिगन्तरालं सुरभीकरोति ।
इतीव बोधं जनयञ्जनानां
वक्त्रे स्वतश्चिलकमाविरासीत् ॥ ३८ ॥

निगमगहनभूमौ गाढगूढं पुराणं
निधिमनवधिमाप्तुं योगिनामप्यदृश्यम् ।
गुणमणिरमणीयं श्रीनिवासाभिधानं
स्फुटमवहत दृष्ट्योरञ्जनं किं नु डिम्भः ॥ ३९ ॥

स्मितरुचिपरिवाहव्याजतो वाक्प्रपञ्चं
श्रुतिविततिवधूटीकण्ठमुक्तासराभम् ।
गिरिपरिवृढमन्थक्षुब्धदुग्धाब्धिवीची-
क्षरदमृतसनाभि बालको व्याचकार ॥ ४० ॥

क्षीरं पिबन् सत्त्वमिवार्जयन् द्राङ्
निर्भेत्तुकामो बहुधा तमांसि ।
पर्याप्तमेतावदितीव क्लृप्तैः
फूत्कारभेदैर्व्यवृणोत् फणित्वम् ॥ ४१ ॥

जिह्वायुगं किमु वसेन्मम गूढपार्श्व-
माविर्भवेत् किमिति बालतनुः फणीन्द्रः ।
वक्त्रेऽङ्गुलिं विरचयन् पदपङ्कजाग्र-
माकृष्य पाणिकमलेन किमालुलोके ॥ ४२ ॥

द्वयाङ्कुरद्वयाकारप्रबोधनपटीयसी ।
अस्य दन्तद्वयी रेजे वक्त्राब्जे मौक्तिकद्युतिः ॥ ४३ ॥

जिह्वानूतनचूतपल्लवगलन्नीहारधाराद्युति-
र्वक्त्राम्भोरुहमौक्तिकालिधिषणामङ्कूरयन्ती शिशोः ।
वेदान्तामृतबिन्दुसङ्गिसुषमासौभाग्यमाबिभ्रती
लालाम्भःपृषदावली समगलत् कीर्त्या समं वादिनाम् ॥ ४४ ॥

श्रीमद्भाष्यादि दिव्यान्नं प्राशयेदखिलान् बुधान् ।
इति तं प्राशयामास किमु दिव्यान्नमध्वरी ॥ ४५ ॥

आलम्ब्य पाणियुगलेन स डोलिकाया
दामानमुद्गमनकेलिपरः किशोरः ।
आधावतो मदवशाद्विषयाटवीषु
चेतोगजानिव रुरोध शरीरभाजाम् ॥ ४६ ॥

उरसा तरसा रसावकाशे
सरसादुत्पतनानि संवितन्वन् ।
उरगत्वमसौ स्फुटं वितेने
न हि गूढं भवति स्वभावसिद्धम् ॥ ४७ ॥

लीलाविशेषदरनम्रितपूर्वकायो
दन्तैश्चतुर्भिरभिशोभितवक्त्रपद्मः ।
पाषण्डभूमिरुहखण्डनचण्डलीलो
रामानुजो गज इव प्रमदं ततान ॥ ४८ ॥

कुमतिमतविघातव्रातक्लृप्ताङ्घ्रिपात-
व्यथितचकितचित्तामर्भको भूतधात्रीम् ।
अनुपदमनुनेता पाणिपङ्केरुहाभ्यां
व्यतनुत विमृशन् किं न्वङ्गणे रिङ्खणानि ॥ ४९ ॥

अवलम्ब्य एष जगतामुदञ्चितः
करपल्लवेन निजबान्धवाङ्गुलिम् ।
अवलम्ब्य भूमिमभिभूषयन् पदै-
र्व्यचरन्महाविभवचिह्नशालिभिः ॥ ५० ॥

अयं हि सर्वास्वपि सुन्दरीषु
वर्तिष्यते मातृवदित्यवेत्य ।
प्रमोदतोऽमुं सुतनिर्विशेषं
पौराम्बुजाक्ष्यः स्फुटमाद्रियन्ते ॥ ५१ ॥

कृताञ्जलिः पतञ्जलिः पदं शिशौ विवक्षति
प्रसक्तवाक्यकल्पने बभूव जैमिनिर्मुनिः ।
तथानुमातुमुद्यते स्वरादिभिः स्वबान्धवान्
प्रमाणमार्गमत्यजत् स गौतमोऽधमो धिया ॥ ५२ ॥

सोऽयं भजन् सर्वशरीरभाजां
मातादिनानाविधबान्धवत्वम् ।
माता पितेत्यादि पदं ब्रुवाण-
श्चिलीयमाणान् विबुधान् व्यधत्त ॥ ५३ ॥

सिद्धार्थशक्तिं वचसां स बालः
सिद्धान्तयिष्यन् प्रथमं परीक्षाम् ।
कर्तुं किमम्बादिपदानि सिद्धे
प्रायुङ्क्त वस्तुन्युदितानुभूतिः ॥ ५४ ॥

आम्नायचूडाशतकस्य भूषणं
स्वीयोक्तिमुक्तामणिभिर्विधास्यतः ।
निर्माय चूडामणिना व्यभूषयद्
बालस्य हर्षेण स केशवाध्वरी ॥ ५५ ॥

विपक्षपक्षक्षपणं विधत्स्व
स्वपक्षरक्षां कलयेति क्लृप्ताम् ।
गुरूत्तमैराशिषमादरेण
तदोमितीवाङ्ग्यकरोत् स बालः ॥ ५६ ॥

धूलीसमीकरणकैतवतः शिरःस्थां
दुष्टाक्षरालिमपमृज्य वसुंधरायाः ।
डिम्भोऽक्षराभ्यसनडम्भत एष चक्रे
भद्राक्षरावलिमभीष्टफलप्रदात्रीम् ॥ ५७ ॥

किमपाठमपाठि पाठकेने-
त्यतिशङ्कातरलीकृतान्तरङ्गः ।
गणयन्निव सर्ववर्णभक्तिं
विलिलेखार्भकवेषभाक् फणीन्द्रः ॥ ५८ ॥

उपनिषदमशेषामेष निर्धूतदोषां
वरगुणमुपनेतुं ब्रह्म विन्देत शक्तिम् ।
इति सुतमुपनीतं केशवाध्वर्यकार्षीत्
कलितकनकवर्षं साष्टवर्षं सहर्षम् ॥ ५९ ॥

स ब्रह्मसूत्रं विवरीतुकामः
सब्रह्म सूत्रं बिभरांबभूव ।
ब्रह्मोपदेशं जगतां विधातुं
ब्रह्मोपदेशं जनकादवाप ॥ ६० ॥

शिरोमणिविभूषितां विलसिताङ्गसंभावितां
पदक्रममनोरमां द्विजवराननोद्भासिनीम् ।
सुवर्णपरिशोभितां नियमपूर्वकं सुन्दरीं
त्रयीमिव रयादयं स्त्रियमुदूढवान् लक्ष्मणः ॥ ६१ ॥

अथायमनितरसाधारणसहजमेधावधीरितधिषणधिषणो विनयभूषणो विख्यातविविधलक्षणो लक्ष्मणो वसिष्ठमिव विद्यावतां वरिष्ठमखिलकलाकलापपाठनगुरुं कमपि गुरुमुपासीनः श्रीमहाभूतपुर्यामेवासीनः सर्वाणि शास्त्राण्यभ्यसितुमारेभे ।

विगाह्य काव्यपद्धतिं विधूतपातकोद्धृतिं
कथासुधातरङ्गिणीतरङ्गितां मुरद्विषः ।
वचःप्रसूनपालिभिः समुन्मिषन्मधूलिभिः
समर्च्य केशवं विभुं जहर्ष केशवात्मजः ॥ ६२ ॥

विचित्रशब्दचातुरीं विजृम्भितार्थमाधुरीं
विमृष्टसत्कथोज्ज्वलां विलोक्य नाटकावलीम् ।
अशेषलोकनाटकप्रकल्पनापटीयसो
महीयसो गरीयसः स मन्यते स्म तत्कवीन् ॥ ६३ ॥

अलंकृतीरलं कृती प्रगृह्य सूक्तिमौक्तिकैः
समं निबध्य सद्गुणैः प्रसाधयन् पतिं श्रियः ।
अलंकृतिर्भुवो भवन्नशेषलोकचक्षुषा-
मवर्धतामृतांशुवन्मुदं परामुदञ्चयन् ॥ ६४ ॥

अथाक्षपादभारतीं प्रपाठयन् प्रकृष्टधीः
प्रभाववान् बुधोत्तमः प्रकल्पनेऽस्य चातुरीम् ।
परीक्ष्य लज्जितो नमन्नमुष्य पादपद्मयोः
किमक्षि विद्यते न वेत्यवेक्षणं व्यधत्त किम् ॥ ६५ ॥

निरर्गलं विनिर्गलद्गलान्तरालगह्वरे
सुधातरङ्गधोरणीधुरीणमात्मभाषितम् ।
कथं निरुध्य भोगिराट् पपाठ लक्ष्मणाकृति-
र्निगूढभावमञ्जसा स्वकीयभाष्यफक्किकाम् ॥ ६६ ॥

विचार्य शाबरं वचो विविच्य भाट्टवार्तिकं
प्रभाकरोक्तिदन्धनं विबुध्य दुर्निबन्धनम् ।
प्रदूष्य तानि जैमिनेर्गिरं प्रसाध्य सेश्वरां
गुरोर्गुरुः स्वयं भवन् स चित्रमातनोत् सताम् ॥ ६७ ॥

काव्यालंकृतिनाटकाक्षचरणव्याहारभोगीन्द्रवाङ्-
मीमांसात्मकशास्त्रषट्पदलसद्वक्त्राम्बुजोऽयं सुधीः ।
नानापक्षविवेकसंभवयशोजालेन दिग्व्यापिना
शुक्लश्यामलपक्षयोर्व्यघटयच्चित्रं विवेकं भुवि ॥ ६८ ॥

सोऽयं सहजतेजोविशेषपराजितकुमारो विज्ञानसंपद्विकास-विहसितसनत्कुमारो विकस्वरमालतीकुसुमसुकुमारो हारीतकेशवाध्वरिकुमारः श्रीमन्महाभूतनगरीशातोदर्यः शिरोमणिरिव शोभमानो विद्वन्मौक्तिकहारनायकमणिरिव लसमानः, वाचस्पतिरिव विबुधोत्तमाभिमतवक्ता वनस्पतिरिव सदालिश्रेयोयोक्ता दिवस्पतिरिव वादाहवेषु शतकोटिनीतिप्रयोक्ता फणिपतिरिव साधुपदव्याकरणे प्रवक्ता, अन्तरालोज्ज्वलत्तटिल्लतिकमञ्जुलं शीतलद्युतिकलायुगलं परिहसता स्वर्णरेखापरिष्कृताभ्यन्तरराजतपट्टद्वितयशैलीं परिशीलयता हरिद्राचूर्णकलिकामन्तरा बिभ्रता पार्श्वपरिशोभि-

ज्योत्स्नासनाभिश्वेतमृत्स्नापरिकल्पितशाखाशालिना दिव्योर्ध्व-पुण्ड्रेण लसमानाष्टमीतमीकान्तललितललाटफलकदर्शनीयः चिर-न्तनभारतीराजहंसीविहारमन्दिरायितवदनारविन्दरमणीयः श्रीरमण-रामणीयकामृततटाकस्फुटकमलवनायमानवदनकरचरणभृङ्गायमाण - लोचनद्वन्द्वाभिनन्दनीयो भगवच्चरणारविन्दसंबन्धद्विगुणसौरभानु-बन्धबन्धुरतुलसीदलदामसमाघ्राणोन्मुखोत्तुङ्गनासाचम्पकमुकुल - कमनीयः उद्वेलकेशवानुरागोदन्वदूर्मिलतालीलाधराधरमणिसंभाव - नीयः, अखिलकलालतामूलकन्दद्वात्रिंशदक्षरीपर्यायमूर्तिधरमुख - कमलमुक्ताफलावलीलीलावहद्विजराजिविराजितो बहुलशास्त्रश्रवण-चातुरीबहुमानलब्धविरुदमणिकुण्डलद्युतिमण्डलमण्डितगण्डमण्डल-विलसितः सारस्वतामृतपरिवाहप्रणालीकेलीधरकम्बुबन्धुरकन्धर-शोभितो गङ्गाप्रवाहपरिवेष्टितहेमाचलशिलाफलकविडम्बनापण्डि-तेन ब्राह्मणलक्ष्मीसाम्राज्यरत्नसिंहासनवैखरीविलसितेन शुभ्रोप-वीतशोभिना महता वक्षःस्थलेन विराजितः, आजानुलम्बिवेतण्ड-शुण्डाविडम्बिस्वप्रकृतिभुजगाधिराजकायकाण्डाडम्बरप्रवचनचतुर - भुजादण्डयुगलभासुरो नाभीतटाकावगाहकुतूहलसमागतकटी - तटीसमारूढधवलाङ्गविहंगसंदोहसन्देहसंधानसंनद्धमहार्घपट्टाम्बरो भ-वाम्भोराशिमज्जज्जनप्लवदण्डायमानोरुकाण्डयुगलमनोहरः शरणा-गतिसमयसमुज्जृम्भितसम्पदुज्ज्वलनतजनतत्क्षणस्वसौन्दर्यनिरी - क्षणनिक्षिप्तमणिदर्पणरमणीयजानुद्वितयसुन्दरोऽतिपरुषकलिपुरुष - पौरुषसर्वंकषदिक्कूलंकषकीर्तिसरित्स्रुक्तिसमार्जितोर्जितजातरूप - जयकाहलीयुगलीमाननीयजङ्घायुगमधुरः, दुर्वादिपरिषच्चरणविन्यास-दूषितमहीमहिलोत्तमाङ्गपरिमलभराधानधुरीणचरणनलिनयुगलवर - णीयो नमज्जनहार्दान्धतमसविध्वंसनधौरेयचरणनखमणिकिरणगण-गणनीयोऽभिनवार्णोजबान्धवबिम्बाडम्बरविडम्बनापण्डितदशवर्ण - सुवर्णसवर्णस्वकायकान्तिमहनीयो महापुरुषलक्षणशतलक्षणीयः, महीमाननीयमहिमा हिमाचल इव समधिकधैर्यगरिमा महार्णव इव निरुपमगभीरिमा रामानुजनामा मेदिनीसुत्रामा प्रमोदार्णवपूरं पौरा-णामुद्वेलयन् लोलम्ब इव केशवचरणाम्बुजसक्तचित्तश्चिरमेधांबभूव ।

पथि सतां विलसन् द्विजवल्लभः
कुवलयप्रियदानदृढव्रतः ।
धवलपक्षशशीव दिने दिने
बहुलकान्तिमवाप कलानिधिः ॥ ६९ ॥

---

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्राज्यपट्टाभिषिक्त-कल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्रबन्धनिर्माणधुरीणश्रीमद्रा-मानुजदेशिकसार्वभौमचरणारविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्या-वैशद्येन तत्सागर्भ्यविभूषणब्रह्मर्षिचर्यभावनाचार्यविबुधवर्यतनूभवेन रामानुजदासेन विरचिते श्रीमद्रामानुजचम्पूप्रबन्धे द्वितीयः स्तबकः ॥

---

अथ तृतीयः स्तबकः

श्रीकेशवाध्वरिसुधानिधिसंभवोऽयं
सारस्वतामृतविवर्धनलब्धकीर्तिः ।
सन्मण्डलीपरिवृतस्तमसो विभेत्ता
रामानुजो विरुरुचे रुचिरः कलाभिः ॥ १ ॥

मयूखवृन्दैरिव भानुमाली
कलाकलापैरिव शीतरश्मिः ।
तरङ्गसंघैरिव दुग्धसिन्धु-
र्गिरां कदम्बैरयमुज्जजृम्भे ॥ २ ॥

दिङ्मण्डलं सुरभयन् यशसां समूहै-
श्चूतद्रुमः परिमलैरिव पुष्पशाली ।
विद्यावतो विवशयन् मधुरैर्वचोभिः
पद्माकरो मधुरसैर्मधुपानिवाभात् ॥ ३ ॥

अथायं विबुधाग्रणीर्विविधविद्यापरिपूर्णोऽप्यर्णव इव भूयसा-मम्भसां विद्यान्तराणामपि लाभे बहुलं कुतूहलमाबिभ्राणः सर्वो-

भ्यर्हितां ब्राह्मीमेव विद्यां प्रथममभ्यसितुकामो निकटे निजपक्ष-परीक्षकालाभात् पूर्वपक्षपरीक्षापि स्वपक्षरक्षायामुपयोक्ष्यत इत्यभि-संधायाह्नाय जाह्नवीतरङ्गाडम्बरनिह्नवपटुतरनिजच्छात्रपरम्परा-वाग्घाटीप्रतिघटितप्रतिकथकयशःप्रकाशस्य यादवप्रकाशस्य काञ्ची-नगरवासिन एकदण्डिसंन्यासिनो यथोक्तकारिश्रीमदावसथसंनिधि-वीथीविभूषणमठघटितावस्थानस्याद्वैतविद्याविहारस्थानस्य करतला-मलकीकृतशारीरकसूत्राध्यायस्य साशमभ्याशं समुपगम्य शाङ्करं शारीरकभाष्यं पठितुं हठात् करिगिरिमेखलारत्नकाञ्चीं काञ्चीं प्रति प्रातिष्ठत ।

अथ निजहृदयपुण्डरीकप्रतिष्ठापितगरुडांसावतंसशौरिः स लक्ष्मणसूरिरभ्यर्णोद्भासमानासमानाविरलपरिमललहरीनिर्भरबहल-प्रसूनभरभासुरमरतकशिलाश्यामलकोमलमृदुलदलपटलितकबलित-विटपिवितानविराजमाननानानोकहनिवहदूरीकृताध्वगपरिश्रमनिर-न्तरानुस्यूतमहाटव्या पदव्या गच्छन्नच्छमतिरखण्डभूमण्डलमण्ड-नायिततुण्डीरमण्डलालंकारसत्यव्रतक्षेत्रपरिष्कारकाञ्चीनगरीशिरो-मणिवारणाचलकूटकोट्याभरणरत्नमकुटायमानपुण्यकोट्यवलोक-नीयपुण्यकोट्यभिधानविमानविलोकनविजृम्भमाणप्रमोदमेदुरहृदयो विस्फुरद्विनयोदयो निरन्तरसमुदञ्चितरोमाञ्चप्रपञ्चकञ्चुकितमूर्ति-र्निरर्गलविनिर्गलदानन्दबाष्पपूरपूर्तिः प्रतिपदविहितप्रणामः परि-णतचिरन्तनसुकृतपरिणामः सरभसाभ्यागतभागवतसमाकलित-बहुमानः समारचितानन्तसरोऽवगाहनो वारिताश्रितारिजातं वारण-गिरिपारिजातं शरणागतरक्षणबद्धबिरुदं वरदं शारदाम्बुजसदृग्भ्यां दृग्भ्यामनिमेषमालोकयन् सुधारसमुचा वाचेत्थमस्तावीत्—

विहाय क्षीराब्धिं परमपि पदं वत्सलतया
दयासिन्धो बन्धो वरद विनतत्राणकुतुकी ।
चिरालापश्रेणीमकुट इव दन्तावलगिरेः
समुत्तुङ्गे शृङ्गे निवससि निजाख्यां सफलयन् ॥ ४ ॥

दिवादीपप्राया दिवि तव गुणा ये स्म भगवन्
दयौदार्यक्षान्तिप्रमितिबलशक्तिप्रभृतयः ।
त एते शोभन्तेऽनिशमिह करिक्ष्माधरगते
त्वयि ध्वान्तस्तोमावृतभवनदीपक्रमभृतः ॥ ५ ॥

अनन्तादीन् सूरीननवधिगुणानप्यगणयन्
महान्तं प्रेमाणं घटयसि विभो मादृशि जने ।
तदेतद्युक्तं गौः प्रथमभववत्सानभिमुखी
नवीने वात्सल्यं जगति यदपत्ये कलयति ॥ ६ ॥

घनश्यामं धाम प्रकटयति ते वर्ष्म वहते
तटिल्लीलीलां श्रितकटितटी हाटकपटी ।
दया धत्ते धाराधरकलितधाराम्बुसुषमां
नतश्रेणीसस्यावलिकुतुकमेषा वितरति ॥ ७ ॥

सेवानम्रसमस्तदेवमकुटीकोटीस्थरत्नच्छटा-
रोचिर्वीचिसरोविकस्वरसरोजातायिताङ्घ्रे विभो ।
वेदोत्तंसवतंसनीलनलिनस्रग्दामरीत्याकृते
वेतण्डाचलमौलिमण्डनमणे मां पाहि देव प्रभो ॥ ८ ॥

आकण्ठं प्रणयप्रवाहललितैरालोकनैः शीतलैः
कारुण्यामृतवारिराशिलहरीपारम्परीविभ्रमैः ।
एनं दीनमतीव दूनमधुना सिञ्चास्ति नातः क्षतिः
शुद्धाशुद्धतरेषु किं न वहति स्थानेषु भागीरथी ॥ ९ ॥

अथ काञ्चीरमणकरुणाकटाक्षसंधुक्षणसमुज्जृम्भिततत्त्वावबोधोऽपि लक्ष्मणाभिधानो विबुधाग्रणीरात्मकटाक्षेण क्रमेण यादवप्रकाशं विदितविशिष्टाद्वैतसिद्धान्तप्रकाशं स्वसङ्गतिभूम्ना विधातुमिव तदभ्याशे शारीरकमीमांसाभ्यासमाकलयितुमुपाक्रमत । तदानीमेव,

कनीयस्या मातुः कमलनयनार्याम्बुजदृशा-
स्तनूजः श्रीरामावरजमनुजातोऽनुजयशाः ।
प्रपन्नो गोविन्दो विकसदरविन्दोज्ज्वलमुखः
समागाद्गेगायास्तटभुवमगाधाद्भुतमतिः ॥ १० ॥

अधिकाञ्चि विरिञ्चियज्ञवेदी-
कृतसांनिध्यमुपेत्य देवराजम् ।
विनयादथ यादवप्रकाशं
स नयोज्जृम्भितधीप्रकाशमागात् ॥ ११ ॥

रामो रामानुजेनेव कृष्णेनेव हलायुधः ।
सोऽयं रामानुजो रेजे गोविन्देन समं पठन् ॥ १२ ॥

अथ कदाचन प्रतिपक्षप्रतिक्षेपदक्षकक्ष्याशतोपक्षेपपुरःसरं प्रचण्डतरं पाठयति मठाधिनेतरि हठात्क्रियया विभीषणाभयप्रदानसमये राम इव मानुषवेषकञ्चुकितः शेषस्य विभाषायं रामानुजः साधुपरित्राणकौतुकातिरेकादतिमानुषं पौरुषं प्रकटीकुर्वन्ननितरसाधारणमेधागुणजुषा भगवत्स्नेहातुलोपमद्रढिमपुषा मनोधनुषा दुर्निवारयुक्तिशतपरम्परां प्रयुञ्जानो गर्वगुरुं तं विद्यागुरुमपथप्रवृत्तमित्थं जिगाय—

स्वयं ज्योतिः परं ब्रह्म कथमज्ञानसंश्रयः ।
न ह्यन्धकारप्राग्भारं भानुमाली भरिष्यति ॥ १३ ॥

चिन्मात्रं ब्रह्म परममालीढं यद्यविद्यया ।
पङ्कमग्नो गज इव कथमुन्मङ्क्तुमर्हति ॥ १४ ॥

ब्रह्मावेद्यमवाच्यं चेद्वेद्यं वाच्यं कथं श्रुतेः ।
अवाच्यं व्याहतमिदं माता वन्ध्येति वाक्यवत् ॥ १५ ॥

भेदाभेदैतदुभयघटनार्थश्रुतित्रयी ।
ऐक्यवादे कथं गच्छेत् साकल्येन प्रमाणताम् ॥ १६ ॥

अद्वितीयत्वनिर्वाहकृते वैदिकसत्तमैः ।
बाह्यैरिवाभ्युपेया स्याद्वेदानामप्रमाणता ॥ १७ ॥

प्रत्यक्षमेकं चार्वाकं प्रमाणमिति मन्यते ।
वेदान्तवादिनामेतत् प्रमाणं किं नु शोभते ॥ १८ ॥

हेतुसाध्यादिसापेक्षं विशेषापादनक्षमम् ।
नानुमानं प्रमाणं स्यान्निर्विशेषे चिदात्मनि ॥ १९ ॥

शब्दस्य तु विशेषेण प्रकृतिप्रत्ययात्मनः ।
विशिष्टार्थैकनिष्ठस्य निर्विशेषे न मानता ॥ २० ॥

तन्निर्विशेषे नो किंचित् प्रमाणमुपलभ्यते ।
शिष्याचार्याज्ञविज्ञादिव्यवस्था नैक्यवादिनाम् ॥ २१ ॥

अतः सर्वप्रमाणार्हं सर्वश्रुतिमनोहरम् ।
विशिष्टाद्वैतमेवेदं ग्राह्यं वेदान्तवेदिभिः ॥ २२ ॥

अथैनां कर्णपरुषामाकर्ण्यापि गिरं गुरुः ।
शिष्यबुद्धिविशेषेण तुष्टो रुष्टो न चाजनि ॥ २३ ॥

तदनु कदाचिदभ्यञ्जनाय सभ्यं जनायतदयं सहृदयं समधिकप्रेमभाजनं समधिगतसभाजनं तनूजमिव रामानुजं न्ययुङ्क्त सामनीतिः स यतिः। तदनन्तरमभ्यञ्जयंस्तं रञ्जयन्नन्तरादित्यविद्यायां प्रस्तूयमानायामादित्यमण्डलान्तर्वर्तिनो देवताचक्रवर्तिनः पुरुषोत्तमस्य पुण्डरीकाक्षनामनिर्वचनान्तर्गतायाः कप्यासवाचः कपिजघनपरतां गुरुणा समीरितामाकर्ण्य कर्णकठोरां बाष्पायमाणलोचनः प्रदीप्तस्य प्रदीपस्य तैलबिन्दुभिरिवोष्मायमाणैरश्रुकणैस्तमूरुकाण्डयोः प्रतपंस्तेनोष्णालुना अकृपालुना सहसोद्वीक्ष्य किमिदमिति पृष्टो धृष्टो भगवदक्ष्णोरभ्यर्हितयोर्हीनोपमानकथनमिदमालंकारिकगोष्ठीदविष्ठमिति भूयिष्ठं प्रत्याख्याय भूयोऽपि तेन कुपितेन सम्यगर्थं त्वमञ्चसि चेत् प्रपञ्चयेति संचोदितः प्रमुदितोऽयमुदारधीरित्थमुदीरयामास—

अक्ष्णोस्तुलां कलयितुं किल पुण्डरीकं
मार्ताण्डमण्डलजुषः पुरुषोत्तमस्य ।
कप्यासवागतिगभीरजलप्ररूढसन्नालमर्ककरफुल्लमियं ब्रवीति ॥ २४ ॥

तदिदमतिरमणीयमनिदमुदयवाणीशिरःश्लाघनीयमाकर्ण्यासहमानो दुर्मनायमानः स दुर्मानी धीमानित्यपराधशतसहनेऽप्ययं प्रतिपदं मह्यमविषह्यं द्रुह्यतीति कोपानलज्वालासदृशा दृशा दहन्निव ताल्वोष्ठपुटकोशविनिर्गतया असूयाशाणनिशातया वाणीकृपाण्या

दारुणया दारयन् जोषमासीनमेनमन्तेवासिनं श्रीमन्महाभूतपुरी-निवासिनमेव विधाय स्वनियोगानुगुणं छात्रगणं पाठयन्नवातिष्ठत।

अथ शठमतिः स कठिनयतिरनुपदं रामानुजसंवित्संपदमनुस्मरन् नक्तंदिवं चिन्तानलेन दन्दह्यमानो दुर्वारदुरभिमानः कलिपोतकैरिव कलितपातकैः कतिपयैरन्तेवासिभिः कौटिल्यैकविलासिभिः समं विमृशंस्तन्मारणमेवास्माकं तारणमिति निर्धारयांबभूव। अथ च,

अन्तर्गूढविषैर्बहिःस्रुतसुधासारैर्गिरां गुम्भनैः
सान्त्वैर्लक्ष्मणदेशिकं स्ववशतामानीय शिष्यैः कृती।
मायावादविशारदत्वमधिकं प्रख्यापयन् पूर्ववत्
सोत्कण्ठं तमपाठयत् कठिनहृद्गूढाभिसन्धिर्यतिः [1] ॥ २५ ॥

अथ कतिपयेषु कथंताचिन्ताधूसरेषु वासरेषु विगलितेषु ब्रह्महत्यादोषभयविगलितपारुष्यः सशिष्योऽमुष्य वैदुष्यमदूष्यमुन्मिषति कथमस्यानायुष्यं कर्तुं प्रभविष्यामीत्यपारचिन्तापारपारावारान्तरनिमग्नो दिष्ट्या हठात् पारमिव निरपायं कंचिदुपायं कृपायत्नणोज्झितोऽयमुपलभ्यालभ्यमिव धनं प्रमोदमानमानसः सहास इत्थं संजगाद—

'अस्य ब्रह्मविदो निपातनविधेर्नो पातकं जायते
गङ्गाया मणिकर्णिकाह्वयमहातीर्थे गभीराम्भसि।
द्वैतं तेन समं निमज्जतुतमां निःशेषमुज्जृम्भता-
मस्माभिः सममन्तरायरहितं चाद्वैतमुर्वीतले' ॥ २६ ॥

अथैकदण्डी मुण्डी त्वात्मप्रतिबिम्बैरिव कलिततमोविजृम्भणावलम्बैरन्तेवासिभिरनेकैः संन्यासिभिरपनीतयज्ञोपवीतशिखाभारस्थानिवद्भावसंभावनीयदुर्भरकन्था[2]भरधारिभिरद्वैतविद्याविहारिभिरनुगम्यमानः कृष्णाजिनपरिवेष्टितवेदान्तपुस्तकविन्यासधन्यांसफलकैस्तृणीकृतैहिकफलकैः प्रमथसच्छात्रैश्छात्रैः सविनयं

---

[1] मठी C. | [2] म्बर A. B.

परिचर्यमाणः सप्रश्रयमनुगच्छद्भिः पौरैरुपचर्यमाणः स्वपक्षरक्षापेक्षया लक्ष्मणसूर्यध्यक्षात्यन्तिकशिक्षां विधातुं भागीरथीयात्राकैतवमुपचिक्षेप ।

अद्वितीय इति वादकथायां
पाण्डितीं प्रकटयन्निव मुण्डी ।
दण्डमेकमवलम्ब्य स चण्डो
निर्ययौ कपटपूर्णपिचण्डः ॥ २७ ॥

वामेषु हस्तेषु घटान् वहन्तो
दण्डान् दधाना इतरेषु चैकान् ।
मायाभुजङ्गानिव रोद्धुकामा-
स्ते प्रस्थिता यादवभक्तिशक्त्या ॥ २८ ॥

अभ्यागम्य पदे पदे सविनयं संप्रार्थितो गेहिभिः
शोणीजीरकरामठादिसुरभीर्गण्डाकृतीरिड्डलीः ।
दोशामण्डलमिन्दुबिम्बधवलं सद्योघृतेनाप्लुतं
भक्तं स्वर्णसवर्णसूपसहितं सामोदमास्वादयन् ॥ २९ ॥

वादाटोपमुदञ्चयन् प्रतिभटाहंकारमुच्चाटयन्
सोऽयं मान्त्रिकतान्त्रिको बहुमतो भूपालकैर्भूरिदैः ।
नानाहिंस्रमृगावलीनिबिडितां विन्ध्याटवीवीथिकां
नानागुल्मलतावितानगहनां वेगाज्जगाहे मठी ॥ ३० ॥

असिपत्रमितघनकण्टकावृते
परितप्तवालुकतयातिदुर्गमे ।
नरकोपमामधिगते घने वने
तनयोपमानमयतीव भास्वति ॥ ३१ ॥

आतन्वन्नवगुण्ठनं कतिपये मुण्डेषु मूर्धस्वहो
प्राधावन्मृगतृष्णिकासु सलिलभ्रान्त्या पिपासार्दिताः ।
छायापादपशङ्कया स्थलभुवः केचित् समापेदिरे
दण्डैः केचन शाटकैरपि गृहान् कृत्वा न्यषीदन् भुवि ॥ ३२ ॥

कन्थाः केऽपि तदा पदार्पणपटीरातेनिरे केचन
व्यातेनुर्हरिणाजिनानि परितश्छत्राणि केचित् पुनः ।
छायाभूरुहमूलभूमिमनयन् प्राक्षालयन् कुण्डिका-
पाथोभिः कतिचित् पदौ परिचरन्तीत्थं स्म भक्ता गुरुम् ॥ ३३ ॥

अथ रामानुजगोविन्दयोः रामलक्ष्मणयोरिव बाल्यात् प्रभृति मैत्रीमाबिभ्रतोर्भेदाभेदश्रुत्योरिव घटकश्रुत्या नियत्या संगतिविशेषः समजनि । तदनु गोविन्दो भयाकुलनयनारविन्दो गुणावर्जिताखिलमनुजाय रामानुजाय पापीयसो वैदिकपदवीदवीयसो हृदयाटवीजाज्वल्यमानासूयादवस्य यादवस्य पापसंकल्पं दम्भोलिकल्पं कथयामास सुधियामग्रणीः ।

आकर्ण्य कर्णपरुषं मणिकर्णिकाया-
मात्मीयपातनवचः स च लक्ष्मणार्यः ।
गोविन्दभट्टमुखतश्चकितः पदव्या-
मन्तर्दधे क्वचन काननसीम्नि दिष्ट्या ॥ ३४ ॥

तदनन्तरं वेदमार्गवैदेशिकानां वेदबाह्यमतदेशिकानां निबन्धनैः समिन्धानमपन्थानं निरुन्धानोऽपि निरवधिकशोकसंधानो विगतजीवनाभिसंधानो महानद्या विष्णुपद्याः पन्थानं विमुञ्चन् विहितविविधस्वदुर्विधिशपथं किंचिद् दवपदं समञ्चन् कुतर्कैरिव कण्टकैराकीर्णं दुर्वादिभिरिव दुष्टमृगैः संपूर्णमातपतप्तसिकताचूर्णं विदीर्णविशीर्णशिलाशकलोदीर्णाभ्यर्णं दुस्तरं दन्तुरं कान्तारान्तरं समन्तादवेक्षमाणः कायक्लेशमुपेक्षमाणश्चण्डातपतापासहिष्णुतया क्वचन विश्रान्तिमपेक्षमाणः सरभसमितस्ततो धावन् विधावर्पितभरो लक्ष्मणविबुधवरो लक्ष्मीरमणकटाक्षात् कंचन छायावृक्षमाश्रित्येत्थमभ्यनन्दत्—

किरति मिहिर एष स्फारमङ्गारजालं
दहति वसुमतीयं कण्टकैः कीलिताङ्गी ।
अशरणमिरिणेऽस्मिन् भ्राम्यताहो मयाप्तः
करिशिखरितटस्थः कल्पशाखीव शाखी ॥ ३५ ॥

विन्ध्यारण्यमरुस्थलीमुपगतान् कालाहिदंष्ट्राखरै-
रुग्रैश्छात्रगणान् गुरुं च बहुधा संताप्य संपीडयन् ।
नानादिक्षु पलायितान् विरचयन् लब्धावकाशोऽधुना
हित्वा भास्करमण्डलं स्वयमयं गोविन्द एवागतः ॥ ३६ ॥

अरक्षद्गोविन्दो द्रुपदतनयां क्रन्दनपरां
समुद्दिष्टस्त्वाख्यामिति न खलु चित्रं भवति मे ।
चिरान्मद्रक्षैकप्रवणहृदयः प्राप्य समयं
स्वयं गोविन्दोऽयं भद्वनकृदित्यद्भुतमिदम् ॥ ३७ ॥

अथाम्बुजिनीकुटुम्बिनि बिम्बफलाडम्बरविडम्बिनि चरमाचलचूडाचुम्बिनि निरालम्बतया चिन्ताम्बुधिनिमग्नो नितरामुद्विग्नः कथंचिदप्यनुपलक्षितस्वरक्षणः स लक्ष्मणः समधिकसंताप इत्थं विललाप—

अस्तक्ष्माधरकन्दरं सरभसं मद्दुर्दशादर्शन-
क्लेशादश्चति लोकबान्धवतया ख्याते जगच्चक्षुषि ।
भीतिः काचिदुपस्थितोपशमिता तत्तादृशाद्गोमुख-
व्याघ्राद्व्याघ्रमुखाद्भयं बहुतरं संभाव्यते संप्रति ॥ ३८ ॥

सत्त्वोन्मेषमयं विधास्यतितरामुर्व्यामितीवेर्ष्यया
सन्ध्यारागमिषादजृम्भत रजो भूयो वितन्वद् व्यथाम् ।
पश्चात् प्रादुरभूत्तमस्तम इव व्यूढं निगूढं वने
गाढं पीडयितुं दृढं जनममुं दुर्वारपापाकृति ॥ ३९ ॥

मायायादवमान्त्रिकेण महती किं प्रेषिता मत्कृते
किं वा भूतपरंपरा समुदिता विन्ध्याटवीवासिनी ।
किं वास्मत्परिपीडनाय बहुधोद्भूता कलेर्वैखरी
किं वा मामकपातकालिरथवा ध्वान्तावली जृम्भते ॥ ४० ॥

विद्युन्मण्डलखड्गवल्लिचलनैर्गर्जारवैर्दुःश्रवै-
र्झञ्झामारुतघोषभीषणतरैर्घोरैः पतद्भिः शरैः ।
कालो मेघगणेन मेऽघनिकरः साडम्बरं रंहसा
बाधां वाङ्मनसातिभूमिमधुना कुर्वन् समुन्मीलति ॥ ४१ ॥

अयोध्यां काञ्चीं वा नियतमभियास्यामि विरजां
विगाहिष्ये किं वा फणिवरसरो व्योम्नि परमे ।
निषेविष्ये देवं करिगिरिपतिं वा समभियां
समूहैः सूरीणां क्षितिसुरवरैर्वा परिचयम् ॥ ४२ ॥

अथ भगवान् वेतण्डाचलमौलिमण्डनमणिर्देवचूडामणिर्भक्त-रक्षणभक्तविरुदो वरदो दयाम्बुनिधिः श्रीनिधिः स्वचरणारविन्द-मधुकरस्य गुणाकरस्य स्वपारम्यप्रतिष्ठापनपरस्य लक्ष्मणसूरिवरस्य वाङ्मनसागोचरवैक्लव्यनिराचिकीर्षया निखिलकल्याणगुणनिधिं महादेवीमाहूय तदभ्यर्णमधिगन्तुं सज्जीबभूव ।

ग्राहग्रस्तकरीन्द्ररक्षणविधापारीणता मे वृथा
प्रह्लादावनपाण्डिमसधिगता साविष्कृतिः स्यान्मुधा ।
पाञ्चालीपरिभूतिवारणकथा मिथ्या भवेदित्यहो
देवो लक्ष्मणदेशिकावनकृते वेगादवापाटवीम् ॥ ४३ ॥

आत्मीयद्युतिभिस्तमो निबिडयन् मन्दस्मितज्योत्स्नया
भूयस्तत्परिखण्डयन् स्फुटतरं पन्थानमुद्दीपयन् ।
स्मेराम्बुरुहाटवीं प्रकटयंश्चित्रं स्थले वीक्षणैः
प्रत्यक्षो बत लक्ष्मणस्य समभूद् व्याधाकृतिः श्रीपतिः ॥ ४४ ॥

अथ सोऽयं लक्ष्मणसूरिर्दिगन्तरविसारिविलोचनो भूरितर-कौतूहलभरितान्तःकरणः सरभसं समभ्यागच्छन्तौ तौ शबर-दम्पतिवेषवन्तौ भगवन्तौ जगतां पती जायापती दूरादेवाव-लोकमानो मनुष्यसंभावनागन्धमात्रेण समेधमानो मनसेत्थं विभावयामास—

बिभ्रत् कोदण्डदण्डं भुजशिखरयुगे सानुषङ्गौ निषङ्गौ
फालस्थस्निग्धमुग्धद्विरदमदमषीरेखया राजमानः ।
चर्मोष्णीषं दधानो वनतरुकुसुमस्तोमक्लृप्तावतंसो
रक्ताक्षः श्यामधामा पृथुलतरपदत्राणशाली समेति ॥ ४५ ॥

विस्तीर्णे कर्णपत्रे द्विपदशनमये कर्णयोर्धारयन्ती
गुञ्जामालां दधाना गलभुवि वलये शङ्खक्लृप्ते वहन्ती ।
कस्तूरीचित्रकोद्यन्निटिलशशिकला देवतेवाटवीनां
काचित् कान्तास्य पार्श्वे विलसति किमयं व्याधयूथाग्रगण्यः॥४६॥

मानुष्यगन्धरहिते गहने गभीरे
पारुष्यपालमृगमालशरण्यभूते ।
सीतासनाथमिव दाशरथिं सकान्तं
व्याधं विलोक्य स ततो व्यथयोज्झितोऽभूत् ॥ ४७ ॥

अनन्तरमचिरप्राप्तौ चिरविप्रोषितौ मातापितराविव शबर-दम्पती साकूतावलोकनसुधालहरीभिः सादरमभिषिञ्चन्तौ निहीन-भूमिकापरिग्रहेणापि निजभक्तानसुञ्चन्तौ सरोमाञ्चप्रपञ्चस्तौ निर्निमेषं निरीक्षमाणः प्रमोदभरं वोढुमक्षममाणः स लक्ष्मणः क्षणं स्तिमितो बभूव ।

अनन्तरमेव भो भो शबरयुवानौ युवामस्मद्भागधेयपरिपाक-वशादभ्याशमुपागतौ कस्माद्देशात् प्रस्थितौ कं देशं प्रसादयितुं गच्छथ इति स्वच्छमतिः स समुपजातजीवनेच्छः परिपप्रच्छ ।

अथ निषादराजोऽपि विषादमसुष्य वाङ्मनसयोरगोचरं निवारयन्नमृतकिरं गिरमित्थमुदीरयामास—

सिद्धाश्रमो मम निवासपदं प्रसिद्धं
संप्रस्थितोऽहमधुना सहितो वधूट्या ।
तुण्डीरमण्डलविभूषणसत्यनाम-
सत्यव्रताभरणकाञ्चयवलोकनाय ॥ ४८ ॥

विषीदसि त्वं किमिहैक एव
निषीदसि त्वं क नु तद्वदाद्य ।
विमुञ्च भीतिं धृतिमञ्च कांचित्
समञ्चसि त्वं झटिति स्वदेशम् ॥ ४९ ॥

अथ निरुपमप्रेमसुरभिलं करुणातरङ्गशीतलमभिनवनवनीत-कोमलमतिमृदुलमतिसरलमखिलतापोपशमनदिव्यौषधमवधीरिताखिलव्यथं मृतसंजीवनमिव विरचितसंजीवनं मोचामदमोचनं शुभवचनमिदमाकर्ण्यानन्दामृतसागरान्तर्निमग्नसर्वावयवः प्रशंसितभगवद्रक्षणोपायवैभवः पुनर्जातमात्मानं मन्यमानः पुण्यकोट्या पुण्यकोटिं पुनरपि द्रक्ष्यामीति मोदमानः स सश्लाघं गिरां गुम्भमित्थमुज्जृम्भयामास—

अव्याजबन्धोः करुणैकसिन्धो-
र्दन्तावलोर्वीधरशेखरेन्दोः ।
अनुग्रहोऽयं निरवग्रहो मे
सविग्रहः संप्रति चाकशीति ॥ ५० ॥
निषादभूपाल कृपालय त्वं
सजानिलक्ष्मीरमणोऽसि साक्षात् ।
त्वत्पुण्डरीकेक्षणभाव एष
प्रत्यक्षमाख्याति भवत्प्रभावम् ॥ ५१ ॥
अश्नामि काञ्चीं क्षितिरत्नकाञ्चीं
सार्धं त्वया व्याधकुलावतंस ।
माद्दक्षरक्षाप्रभवं यशस्ते
तादृक्षमुर्व्यां चिरमाविरस्तु ॥ ५२ ॥
नयामि काञ्चीमचिरान्न यामि भवता विना ।
इति व्याधो जगादैनमथ वात्सल्यवारिधिः ॥ ५३ ॥
अलक्ष्यत कटाक्षतः कमलचक्षुषस्तत्क्षणं
सरो भरितमम्भसा विहसितामृतस्रोतसा ।
विकस्वरकुमुद्वतीपरिमलोर्मिपारम्परी-
निरन्तरदिगन्तरं मरुभुवः स्थलेऽत्यद्भुतम् ॥ ५४ ॥
तत्रावगाह्य विमले विपुले तटाके
निर्माय सान्ध्यनियमं विधिवद्विधाय ।
उज्जीवनाय जगतां स पपौ कृपालु-
स्तज्जीवनं सुरभिलं श्रममुद्धुनानः ॥ ५५ ॥

विषादमेष वारयन्निषादनाथवेषभा-
गशेषलोकरक्षकः सयोषिदेकिकां निशाम् ।
दवीयसा पथा नयन् स दन्तिभूभृदन्तिकं
तृषं भृशं प्रकाशयन्नदर्शयच्च वापिकाम् ॥ ७६ ॥

निगूढः पाताले गुरुपरिवृढस्यास्य वचसां
प्रवाहैर्न्यग्भूतो द्रुतममृतकूपः सुरपतेः ।
इदानीं साचिव्यं रचयितुमिवागत्य विलसन्
दृशोः शालाकूपः कमपि परितोषं समदिशत् ॥ ७७ ॥

अथ ससंभ्रमं शबरकुटुम्बिपिपासामुपशमयितुं कल्हार-कुमुदकुवलयविचिलिताभ्यन्तरामविरलपरिमललहरीलुब्धमुग्धमधु-करनिकरकोलाहलवाचालदिगन्तरां वनदेवताविलासदर्पणिकां निरन्तरघटितस्फटिकशिलारोहणश्रेणीनिःश्रेणिकां दरदलत्कोकनद-कोशदीपिकां शालावापिकामम्भो ग्रहीतुमवतरति लक्ष्मणाभिख्या-वति संख्यावति,

अकुण्ठमुपकण्ठं तं नीत्वा सोत्कण्ठमञ्जसा ।
महादेव्या समं भेजे वरदो द्विरदाचलम् ॥ ७८ ॥

अम्भः शीतलमादाय सोऽयमञ्जलिना स्वयम् ।
प्रदातुमुन्मुखस्तीरे नाद्राक्षीद् व्याधदम्पती ॥ ७९ ॥

ससंभ्रमं दिक्षु विदिक्षु चक्षुषी
विचलायन् लक्ष्मण एष तत्क्षणम् ।
अवीक्षमाणः क्षमते न वोढुं
तयोर्वियोगं समयोः पितृभ्याम् ॥ ८० ॥

आर्तत्राणपरायणः स भगवान्नारायणो वारण-
क्षोणीभृद्वरमौलिमण्डनमणिर्वन्दारुचिन्तामणिः ।
मत्संतापनिवारणाय करुणापूर्णो हठादागतो
बिभ्राणः शबराकृतिं मम परित्राता स्ववासं ययौ ॥ ८१ ॥

मायावी धनंजयमिव मामपि वञ्चयामासेति दुरन्तचिन्ताभृति लक्ष्मणसुधीक्ष्माभृति,

श्रीकान्तः सह कान्तया शबरतामसाद्य मायां वहन्
व्यामोहं विरचय्य हन्त सुधियोऽप्येतेन सार्धं चरन् ।
अज्ञातः करिशैलधाम समगादित्येव हासोदया-
ज्जम्भारातिदिशाविशालनयना प्रापावदातद्युतिम् ॥ ६२ ॥

आलापैर्मधुरैरशेषजगतामानन्दसंदायकं
भूयो जातमिवागतं गहनतो वीक्षाविशेषाद्विभोः ।
श्रीरामानुजनामकं द्विजपतिं सत्पक्षसंरक्षकं
संप्रासागमशेखरा द्विजवराः संतोषतोऽघोषयन् ॥ ६३ ॥

तल्लाभादमरावतीं विजयता काञ्चीपुरेणावनीं
नीता माघवनी वनीव ललिता शाला विशाला तदा ।
चेरुः केचन कर्षकाः कतिपये गोपालका जालिका-
स्तान् पृष्ट्वा समवेत्य कांचन मुदं काञ्चीयमित्यभ्यगात् ॥ ६४ ॥

श्रीकान्तचिन्तामणिहेमपेट्या
परिष्कृतेभाचलकूटकोट्या ।
सत्पुण्यकोट्या मम पुण्यकोट्या
विलोचने संप्रति शीतले मे ॥ ६५ ॥

अन्यत् पूर्णादिति वचनतः सिद्धमर्थं मदर्थं
व्यक्तीचक्रे करिगिरिशिखापारिजातो ममेति ।
शालाकूपात् प्रतिदिनमयं पूर्णकुम्भं प्रदातुं
काञ्चीपूर्णप्रमुखमुखतो हन्त सन्धां बबन्ध ॥ ६६ ॥

आकर्ण्य लक्ष्मणाचार्यरक्षणक्रममद्भुतम् ।
अभीष्टवरदं देवं तुष्टुवुर्विविधं बुधाः ॥ ६७ ॥

अपहृत्य वेदमधिगर्भमम्बुधे-
र्दनुजो निनाय जलजः स्वलब्धये ।
अजनिष्ट यः स किल वेदवित्कृते
वनचारयोग्यशबराकृतिर्हरिः ॥ ६८ ॥

आधारोऽम्बुनिधेः सुधामजनयन्मन्थानभूमीभृतो
यः पूर्वं विबुधावनाय महतीं मूर्तिं वहन् कामठीम् ।
सोऽयं लक्ष्मणदेशिकक्षितिभृतोऽधिष्ठानभूतोऽधुना
वेदाब्धेरमृतं हरन् सुमनसां त्राणाय बोभूयते ॥ ६९ ॥

अम्भःपूरे निमग्नां महति जलनिधेरण्डभित्तिं प्रपन्नां
धात्रीं प्रद्राणगात्रीं सुकरमुदधरत् पोत्रतो यः क्षणेन ।
वेतण्डक्ष्माधरान्तर्विहरणरसिकः पोत्रिणां चक्रवर्ती
दुःखाम्भोधौ निमग्नं गुरुमचलमहो रंहसाभ्युज्जहार ॥ ७० ॥

आलम्ब्य स्तम्भमेकं नरहरिवपुषा रंहसा प्रादुरासी-
द्यः प्रह्लादावनाय स्वयमजनि निरालम्बनोऽयं किरातः ।
दन्तित्राणत्वरातो रभसमनवधिं प्राप्य बाहं विनैव
प्राप्तो रामानुजाख्यं गुरुमणिमवितुं व्याकुलश्चक्रपाणिः ॥ ७१ ॥

श्रियः कान्तो हन्त त्रिपदपरिमाणां वसुमतीं
बिभिक्षे रक्षायै विबुधकमितुः कैतववटुः ।
वटुर्जातो रामावरजविबुधाध्यक्षमवितुं
किरातः कान्तारे व्यचरदिति चित्रं न भवति ॥ ७२ ॥

कुठारं कठोरं करे कल्पयित्वा
समीकृत्य भूमिं समुत्कृत्य कुञ्जान् ।
अनैषीत् पदव्या समीच्या स काञ्चीं
मुनिर्भार्गवोऽयं मुदा लक्ष्मणार्यम् ॥ ७३ ॥

अटव्यां महत्यां निषण्णं विषण्णं
समागत्य रामः स रामानुजं द्राक् ।
सुहृत्त्वैकपालं परित्रायते स्म
प्रभूतानुकम्पः प्ररूढप्रकम्पः ॥ ७४ ॥

आत्मीयं पाशुपाल्यं समयविगमतो विस्मृतं मन्यमानो
भूयोऽभ्यस्यन्निवार्यं वनभुवि विचरंश्चारयन् गोसहस्रम् ।
दिष्ट्या लब्ध्वा निधानं निरवधिकमिदं लक्ष्मणार्याभिधानं
नूनं मोदैकतानः करिगिरिवसतिर्वर्तते कंसवैरी ॥ ७५ ॥

निराघाटं घोटं श्रुतिमकुटमार्गाटनपटु-
स्तटीमध्यारूढः करिशिखरिणः कश्चिदटवीम् ।
हठाद्गत्वा विद्याविहरणपदं लक्ष्मणगुरुं
ध्रुवं संविभ्राणो द्रुतमनयदात्मीयवसतिम् ॥ ७६ ॥

अलब्धानात्मीयान् दशभिरवतारैरसुलभान्
मणीन् जीवाभिख्यान् भवजलधिमध्ये निपतितान् ।
समुद्धर्तुं रामावरजमवतार्य क्षितितले
कथंकारं हातुं प्रभवति करिक्ष्माधरपतिः ॥ ७७ ॥

व्यराजत स भाजनं वरदराजवीक्षाततेः
सभाजनसभाजनं समधिगम्य रामानुजः ।
अखण्डशशिमण्डलच्छविविडम्बनापाण्डितीं
श्रितैर्निजयशोभरैर्धवलयन् दिशामण्डलम् ॥ ७८ ॥

अथ यादवो दव इवातिभीषणः सरुषा परुषारुणरोचिषा चक्षुषा गजसुल्कयेव प्रताप्य लक्ष्मणसहजं तं प्रविहाय सहजविनयं समागतं कमलनयनसूरिसुतं समाप्य च कोपदावपावकज्वालाकलापविजृम्भणं निजचित्तघनाघननिरर्गलविनिनिर्गलदानन्दामृतवर्षधाराभिर्मध्येपथमेव फलितं मम संकल्पकल्पद्रुमेणेति निश्चयरत्नं चिरत्नतपोलब्धमन्तर्निगूढं निधाय दुर्योधन इव पाण्डवविपत्ताण्डवे गलन्मोदाश्रु खेदाश्रु भावयन् दुःखाभिनयमित्थमाचचार—

विहंगमैर्भुजंगमैस्तुरंगमैः प्लवंगमै-
र्विशङ्कटेऽतिसंकटे महावटे घनावटे ।
अहो वने गतावने सयातने सपातने
विलक्षणो विरक्षणो विचक्षणः क्व लक्ष्मणः ॥ ७९ ॥

किं व्याघ्रः कबलीचकार शरभः किं निर्बिभेद क्रुधा
भूदारो विददार किं किमु वने कण्ठीरवोऽकुण्ठयत् ।
किं व्यालो निजगाल किं व्यदलयद्दन्तावलग्रामणी-
श्चिन्तातः किमु तत् परं समभजज्ज्योतिः स रामानुजः ॥ ८० ॥

आरभ्य बाल्यान्मम संनिधाने
विद्यापयो बालक एष पीत्वा ।
वात्सल्यपात्रं मम हा विनैनं
कथं वसेयं शबलेव वत्सम् ॥ ८१ ॥

रत्नं महार्घमिव लक्ष्मणदेशिकेन्द्रं
पाटच्चरैरपटुधीरपहार्य सोऽहम् ।
कान्तारसीमनि कथं पुरमाश्रयिष्ये
लज्जाम्बुधिं नयति शोकमहानदी माम् ॥ ८२ ॥

तदनु दुरापचण्डातपतापशान्तिसमनन्तरं क्रमेण दिगन्तरेभ्यः सीमन्तितैर्गुर्वाज्ञानिगलितैर्विजृम्भितविनयगुणैः स्वानुगुणैश्छात्रगणैः सह विन्ध्याटवीकठोरतातिरेकेण रामानुजसुधीमणेर्व्यतिरेकमेव निर्धार्य स कपटी मठी रामानुजविरहसंतापोऽयमन्तरेण विष्णुपदीपरिवाहावगाहनं न प्रशाम्यतीति चन्दनशीतलया वाचा समुद्घाटयन् झटिति घटितविकटतरचरणन्यासघाटीपाटवः खाटतटिनीतटीमटीकत ।

शिष्यैः सार्धं विगाह्य त्रिदशकमलिनीं मालिनीं तां मठाल्या
विश्वेशं वीक्ष्य काशीपतिमतिमुदितं स प्रकाशीकृतश्रीः ।
काञ्चीं भूरत्नकाञ्चीं झटिति यतिरयं लक्ष्मणार्यस्य चित्तं
श्रुत्वा चारित्रमस्मिन् प्रचुरबहुमतिः पाठयन्नध्यवात्सीत् ॥ ८३ ॥

लिङ्गं गङ्गाधरस्य प्रबलकरुणया लिङ्गितस्य प्रसादात्
पाणिप्राप्तं महत्तन्निधिमिव सहसादाय गङ्गातरङ्गात् ।
आशारङ्गान्तरङ्गः पुरममरपुरीवैखरीमभ्यविन्दद्
गोविन्दः स्थापयित्वा क्वचन बहुमतः सद्भिराचार्यवद्भिः ॥ ८४ ॥

काञ्चीपूर्णप्रमुखसुजनप्रेमसंतानशाखी
काञ्चीकान्तप्रगुणकरुणाम्भोधिराकाहिमांशुः ।
कांचित् कीर्तिं दिशि दिशि शरच्चन्द्रिकाभां वितन्वन्
कांचित् पूजां प्रतिदिनमसौ लक्ष्मणार्योऽभ्युपैति ॥ ८९ ॥

---

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्राज्यपट्टाभिषिक्त-कल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्रबन्धनिर्माणधुरीणश्रीमद्रा-मानुजदेशिकसार्वभौमचरणारविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्या-वैशद्येन तत्सागर्भ्यविभूषणब्रह्मर्षिचर्यभावनाचार्यविबुधवर्यतनूभवेन रामानुजदासेन विरचिते श्रीरामानुजचम्पूप्रबन्धे तृतीयः स्तबकः ॥

---

अथ चतुर्थः स्तबकः

अञ्चन् काञ्चीरमणमनिशं लक्ष्मणाचार्यसूरिः
शालाकूपादमृतकलशीमानयन् प्रीणयंस्तम् ।
काञ्चीपूर्णं वरदकरुणापूर्णमभ्यर्णभाजं
तस्योदूढव्यजनभजनं सेवमानश्चकाशे ॥ १ ॥

तदानीम्,

श्रीमान् यामुनसंयमी सुरभयन् सूक्तैः सुधास्यन्दिभि-
र्वेदान्तानधिरङ्गभूमि विभवं श्रीरङ्गिणः पालयन् ।
शिष्याणां विततिं भुवो विरचयन् मुक्तावलीभूषणं
रेजे स्वीययशोभरैर्धवलयन् दिक्सौधपारम्परीम् ॥ २ ॥

अध्यक्षीकृतकेसराङ्कमुखतः सर्वप्रबन्धावलीं
लब्ध्वा नष्टधनं यथा प्रमुदितो रङ्गेशभक्ताग्रणीः ।
तामुर्व्यां प्रथयन् भगीरथ इव स्वर्लोककल्लोलिनीं
ख्यातो यस्य पितामहो निरुपमो नाथाभिधानो मुनिः ॥ ३ ॥

दिव्यालर्कमहौषधीमुपनयन् संवत्सरार्धं स्वयं
संशोध्याय इवाथ कांचन रुचिं चातुर्यतः प्रापयन् ।
नीत्वा हन्त महार्थलाभपदवीं सिद्धो यथादर्शय-
द्रामो रङ्गनिधिं पितामहमुखैराराधितं साधितम् ॥ ४ ॥

सोऽयमनुश्रवशिखरार्णवकर्णधारः सकलविद्याधारो वाचस्पतिरिव भौमः श्रीयामुनमुनिसार्वभौमः श्रीरङ्गभूपालं बालमिव सकलोपचारैरुपलालयन् समधिकदेशिकपथिकप्रचारोद्धतिं वैदिकसिद्धान्तपद्धतिं गीतार्थसंग्रहस्तोत्ररत्नसिद्धित्रयागमप्रामाण्याद्यनवीनवाणीमङ्गलसूत्रायमाणनिबन्धनमुखेन प्रतिष्ठापयन् मदनन्तरमेतन्निर्वोढारं न कंचन विपक्षविनेतारं स्वपक्षनेतारमवेक्ष इति दुरन्तचिन्तासंतानकल्लोलिनीकान्तजठरान्तर्निमज्जन् जीवसमुज्जीवनौषधराजीवाक्षकटाक्षविशेषोन्मेषमाकाङ्क्षंश्चिरमवर्तत ।

अगृह्णीतां वेगाच्चरणकमले यामुनमुने-
रुभौ भक्तौ काञ्चीरमणचरणाम्भोजमधुपौ ।
अथैतावब्रूतामतुलमखिलोज्जीवनचणं
विचित्रं चारित्रं शुभगुणगुरोर्लक्ष्मणगुरोः ॥ ५ ॥

तदिदमाकर्ण्य कर्णामृतं स यामुनमुनिमूर्धन्यो धन्यो वदान्यो निखिलजनसंमान्यस्ताभ्यां पुत्रोत्सवशंसिभ्यामिव बहुलं पारितोषिकं वितीर्य प्रमोदभरनिर्भरान्तःकरणश्चिकीर्षिताखिलहितकरणः स्वान्ते वासिनः स्वान्तेवासिनो दर्शनं निर्वोढुं प्रभविष्यतः स्वमनोरथं पूरयिष्यतः सकलविद्याविचक्षणस्य लक्ष्मणस्य साधुजनशरण्यस्य संख्यावतामग्रगण्यस्य विश्रुतविविधानुभावं प्रभावं प्रबोधयंश्चन्द्रमा इव चकोरान् घनाघन इव चातकान् प्रमोदयन्नित्थमवादीत्—

'अस्ति श्रीभूतनगरी केशवोत्तंसशालिनी ।
तदाख्योऽध्वर्यभूत्तत्र तत्सुतो लक्ष्मणः सुधीः ॥ ६ ॥

स यादवप्रकाशस्य पठन्नभ्याशमाश्रितः ।
उत्पथं प्रतिपन्नं तं शिक्षयन् विबुधाग्रणीः ॥ ७ ॥

अधुनास्मत्पक्षरक्षादक्षिणाः कृतलक्षणाः ।
परपक्षप्रतिक्षेपदक्षाः कक्ष्याः प्रवर्षति ॥ ८ ॥

अनेकधर्माश्रयमेकधर्मिणं
जगुः समानाधिकृतेर्वचांसि ।
इति ब्रुवाणो नयमेकतागिरा-
मखण्डवाक्यार्थमसावखण्डयत् ॥ ९ ॥

अविद्यावत् परं ब्रह्मेत्यविद्यावत्त्वमेव हि ।
सत्योपाधिं कथयतां सत्योपाधित्वमिष्यते ॥ १० ॥

परस्यातिष्ठमानानां परिणामं जगत्तया ।
दोषाकरत्वं तस्यैव स्वात्मनां च भविष्यति ॥ ११ ॥

कुण्ठितश्रुतयो ये स्युः कुण्ठितश्रुतयो हि ते ।
निह्नुतश्रुतयो जाता लब्धविस्मृतयस्तथा ॥ १२ ॥

परित्यक्तब्रह्मसूत्रास्तथाभावं स्वयं श्रिताः ।
इत्थं बहुविधान् न्यायानाचक्षाणः स लक्ष्मणः ॥ १३ ॥

विशिष्टाद्वैतसिद्धान्तं रक्षन्नक्षतया धिया ।
प्रत्याचष्ट गुरुं स्पष्टं पूर्वपक्षाभिधायिनम् ॥ १४ ॥

अथ कदाचिदभ्यञ्जनवेलायाम्,

अर्थं जल्पति मर्कटस्य जघनं कप्यासवाचो गुरौ
श्रीरामावरजस्य बाष्पपृषतो ह्यभ्यञ्जनं कुर्वतः ।
ऊर्वोरुष्णतरा निपेतुरथ तत्संचोदितोऽर्थं ब्रुवन्
गम्भीराम्भ इति प्रकृत्य स सुधीरेनं विजिग्येतराम् ॥ १५ ॥

अखण्डार्थादि सर्वस्वं खण्डयन् पण्डिताग्रणीः ।
अभ्यञ्जनमिषादेष शिरोहस्तं न्यधाद्यतेः ॥ १६ ॥

इत्थं न्यायशतैस्तीक्ष्णैर्लक्ष्मणेन प्रपीडितः ।
मेघनादो महामायी चुक्रोध विबुधेन्द्रजित् ॥ १७ ॥

गाङ्गयात्रामयीं कांचिन्मायामयमुदञ्चयन् ।
उद्ययौ लक्ष्मणं हन्तुं निर्ययौ मणिकर्णिकाम् ॥ १८ ॥

मातृष्वसेयाद्गोविन्दादाकर्ण्येदमथाध्वनि ।
अन्तर्दधे वने क्वापि व्यथमानः सुधीमणिः ॥ १९ ॥

काञ्चीपरिवृढः सार्धं देव्या व्याधाकृतिर्भवन् ।
अह्नाय निन्ये स्वपुरीमेनं दूनं कृपानिधिः ॥ २० ॥

एवं ब्रुवाते सुव्यक्तमेतौ भागवतोत्तमौ ।
काञ्चीरमणकारुण्यकटाक्षात् स्वयमागतौ ॥ २१ ॥

श्रीरङ्गभूमीरमणः करुणावरुणालयः ।
अस्मन्मनोरथं तस्मात् पूर्णं तूर्णं करिष्यति ॥ २२ ॥'

इति । अथ तत्क्षणमेव लक्ष्मणमुनिदिदृक्षया रङ्गक्षमाध्यक्षमभ्यनुज्ञाप्य सह शिष्यैः प्रस्थाय काञ्चीपूर्णप्रमुखबहुमतः काञ्चीमास्थाय चिन्तामहार्णवं तितीर्षुः कंचन रामानुजनामानं पोतं वारणाचलरमणकरुणातरङ्गिणीप्रवाहमार्गेण समानेतुकामो यादवप्रज्ञानिलावर्तगर्तातिक्रमेण तदाकर्षणं दुष्करमिति मत्वा पुण्यकोट्याह्वयकुव्यालयमपारसंसाराकूपारकर्णधारं निरपायमुपायं प्रष्टुकाम इव तं प्रत्यहं प्रणमन् कंचिदनेहसं तत्रैवावतस्थे ।

अथ कदाचन दन्तिक्षमाभृदध्यक्षावेक्षणापेक्षया प्रादक्षिण्यक्रमेणाभ्यागच्छति सच्छात्रगणे प्रत्नालापशिरोरत्नतस्करमुष्करमस्करिणि नारायणनमस्कारपरायणे,

आजानुलम्बिभुजमम्बुजचारुनेत्रं
प्राभातिकद्युमणिबिम्बविडम्बिकान्तिम् ।
उत्तुङ्गमङ्गलकृशाङ्गमवेक्ष्य धीरं
रामानुजोऽयमिति निश्चिनुते स्म योगी ॥ २३ ॥

आसूरिवंशकलशार्णवकल्पशाखी
श्रीकेशवाध्वरितनूभव एष सूरिः ।
देवाधिपत्यजनकिंकरवाक्यमित्थं
संवादयन्नथ परं मुमुदे तदानीम् ॥ २४ ॥

अब्जाकरे किरणजालमिवांशुमाली
जैवातृकः करकलापमिवोत्पलौघे ।
रामानुजे मुनिवरः करुणाकटाक्ष-
पूरं निधाय वरदं शरणं जगाम ॥ २५ ॥

यस्य प्रसादकलया बधिरः शृणोति
पङ्गुः प्रधावति जवेन च वक्ति मूकः ।
अन्धः प्रपश्यति सुतं लभते च वन्ध्या
तं देवदेववरदं शरणं गतोऽस्मि ॥ २६ ॥

कृत्वेत्थं शरणागतिं दृढतरां संसेव्य दन्तावल-
क्ष्माभृत्कान्तमनन्तमिष्टवरदं तेनातिसंमानितः ।
मध्येमार्गमनेकशिष्यनिवहैराराधितो वेगतः
श्रीमद्वीपपुरीमवाप्य मुदितो योगिक्ष्माभृत्तदा ॥ २७ ॥

आद्यद्राविडवेददेशिकमहायोगिल्यीसंभव-
त्संमर्दानुभवप्रमोदभरितं श्रीदेहलीवल्लभम् ।
नत्वा तत्कृतदिव्यदीपविदितं श्रीवीरनारायण-
क्षेत्रं पादरजःपवित्रमगमत्प्राचां गुरूणां मुनिः ॥ २८ ॥

अरविन्दसमालोकैः कुरुविन्दविडम्बिभिः ।
वीरनारायणसरः पम्पाकल्पमकल्पयत् ॥ २९ ॥

अगण्यपुण्यसंप्राप्यं शरण्यं सर्वयोगिनाम् ।
अरण्यमभितः पश्यंस्तरण्यंशुनिवारणम् ॥ ३० ॥

पितामहोऽस्मिन्नस्माकं पितामह इवापरः ।
साक्षात्कर्ता शठारातेर्लब्धात्मा तत्कटाक्षतः ॥ ३१ ॥

उत्सन्नद्राविडाम्नायसमुद्धारविचक्षणः ।
श्रीमद्विभूतिमत् सर्वं भगवत्प्रायमीक्षिता ॥ ३२ ॥

कंसारिध्याननिरतो योगाभ्यासविचक्षणः ।
चिरं नाथमुनिः श्रीमान् रेजे भेजे परां गतिम् ॥ ३३ ॥

निजाङ्घ्रिभक्तिदुग्धाब्धिं तं निरीक्षितुमागतान् ।
अद्यापि कृतसांनिध्यांस्तद्वासस्थानगौरवात् ॥ ३४ ॥

श्रीरङ्गशायिश्रीराजगोपालादीन् भजन् मुदा ।
कुरुकेशपुराभ्याशमभ्यगच्छत् स योगिराट् ॥ ३५ ॥

श्रीमान् भार्गवतीर्थतीरनिलयः श्रीवीरनारायणः
साकं क्रीडति गारुडाऽमलतया ब्रह्मर्षिसंभावितः ।
शास्ति ग्राममयं तथापि लभते यो देवदेवान्वयात्
ख्यातिं श्रीकुरुकेशवासवशतो भक्तोन्नतिस्तादृशी ॥ ३६ ॥

अथ प्रसङ्गात् स्वोदन्तमन्तेवासिजनोज्जीवनाय कंचन प्रपञ्चयामास—

द्रष्टुं तं कुरुकापुरीश्वरगुरुं तूर्णं तदभ्यर्णभू-
भागं सोऽहमवाप्य गूढचरणन्यासध्वनिस्तस्थिवान् ।
भीतो योगवियोगशङ्कितमतिर्योगानुयोगेच्छया
संपश्यन् समयं क्षणेन गुरुणा प्रेम्णा समालोकितः ॥ ३७ ॥

श्रीवक्षोजघटीतटीदृढतराश्लेषं तृणीकुर्वता
मत्संश्लेषपरेण गोपशिशुनाऽवष्टभ्य मेंऽस्यस्थलीम् ।
पाणिभ्यामभिवीक्षितोऽस्मि बहुधा सोत्कण्ठमुत्कण्ठया
तस्मान्नाथकुलोद्भवस्त्वमिति मां पौत्रं गुरोर्ज्ञातवान् ॥ ३८ ॥

जाने तावकमाशयं मम वपुर्विश्लेषकाले त्वया
योगो योगमुपेष्यतीति कथयन् मे प्रादिशत् पत्रिकाम् ।
श्रीरङ्गेन्द्रसमक्षमक्षतधिया विज्ञापनाकारिणा
संदिष्टः शठकोपसूक्तिमधुनानुष्ठानतः स्थापय ॥ ३९ ॥

इत्युक्तोऽहमनन्तपट्टणमगामुद्घाटयन् पेटिकां
दृष्ट्वा तत्र च पत्रिकां समशुचं नास्तीति मे पुष्पकम् ।
मद्विश्लेषभरासहेन जहता मच्छासनं रंहसा
रङ्गान्मेऽभिमुखं समागतवता मेऽनन्तपुर्यग्रतः ॥ ४० ॥

प्राप्तेऽतिप्रणयं मयि प्रथयता प्राचार्यनिष्ठावता
मोक्षोऽलभ्यत इत्यबोधि तदहं मुक्तोऽभवं चिन्तया ।
इत्येवं निकटस्थितान् निजकथाहृष्टान् वितन्वन् मुदा
श्रीमान् योगिवरोजगाम सहसा श्रीवीरनारायणम् ॥ ४१ ॥

इत्थमनुसंधाय संनिधाय प्रणिधाय विधाय च प्रणतार्तिवारण-परायणस्य वीरनारायणस्य प्रणतिं पुराणसुकृतपरिणतिं नगरा-

द्भिरभ्येत्य दक्षिणस्यां दिशि दृश्यमानमनतिचिरोज्झिततया किंचिल्लुसालुससंस्थानं संस्थानमालोकमानो जुगुप्समानः पुरातनं स्वाभिमानं कुत्सयन्नहो जितमिति सोत्साहं झटिति घटित-पदविन्यासः पदवीमदवीयसीमतिक्रममाणो भक्तजनाभ्यर्थना-सहस्रनिर्बन्धभूम्ना निखिलोज्जीवननिदानं स्वकीयमपदानमुदाहर्तु-मुपचक्रमे—

संक्षेपेण पुराणवृत्तमधुना संकीर्त्यते श्रूयतां
सोऽहं षोडशवार्षिकः स्थिरवचःशास्त्राब्धिपारं गतः ।
वाग्धाटी प्रतिवादिवारणघटाटोपाभेटीधिक्क्रिया-
पारीणा कविता च मे निरुपमा वाग्वल्लरीमञ्जरी ॥ ४२ ॥

महाभाष्यभट्टो महावृद्ध एको
महाभाष्यदाता ममेत्थं बभाषे ।
पुरोधाय चीटीं पुरेधोनिरोधं
स रोधोविहीनं विरोधैकमूलम् ॥ ४३ ॥

दशबन्धनिबन्धनां कठोरां
शुचमेतस्य स चीटिकां विपाट्य ।
अहिताय पुरोहिताय हृद्यं
प्रहितं पद्ययुगं क्रमेण तस्मै ॥ ४४ ॥

आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठा-
दा रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ।
आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कसोमावतंसा-
न्मीमांसाशास्त्रयुग्मश्रममृदितमना मृग्यतां मादृशोऽन्यः ॥ ४५ ॥

न वयं कवयस्तु केवलं
न वयं केवलतन्त्रपारगाः ।
अपि तु प्रतिवादिवारण-
प्रकटाटोपविपाटनक्षमाः ॥ ४६ ॥

आज्ञप्तो धिषणोदयेन धिषणप्रौढिं तृणीकुर्वता
मत्पाण्डित्यविदा स चोलनृपतिस्तेनातिकौतूहलात् ।
क्षिप्रं प्रेषयति स्म हाटकमयीमान्दोलिकां कौतुका-
त्तामारुह्य सभां प्रविश्य च मया प्रारम्भि वादार्भटी ॥ ४७ ॥

तत्काले महिषी बभाण भगवत्प्रावण्यविद्योतिता
मत्प्रावण्यविशारदा यदि जयी मायी पुरोधास्तव ।
दास्यं ते करवाणि चोलनृपतिस्त्वेवं जगौ वैष्णवो
जेता चेत्तव कीरवाणि वितराम्यस्यार्धराज्यं दिश ॥ ४८ ॥

पणबन्धं विधायेत्थं राज्ञि राज्ञ्यां च पश्यतोः ।
वादावहं व्यरचयं लौकिके वैदिकेऽपि च ॥ ४९ ॥

न ते माता वन्ध्या नरपतिरयं सर्वपृथिवी-
पतिः साध्वी भूमीरमणरमणीति त्रिविधया ।
गिरेत्थं लौकिक्या प्रथममजयं वैदिकवचः-
प्रभेदैस्त्रीन् वारानजयमथ तं गर्वभरितम् ॥ ५० ॥

आश्लिष्य प्रमदप्ररूढपुलका मातेव राजाङ्गना
सा मां पालयितुं समागत इति प्रोवाच कांचिद्गिरम् ।
सा मे यामुननामतोऽपि महती ख्याता समाख्या भव-
द्योगो रूढिमपेक्ष्य हन्त बलवद्भावं समाढौकते ॥ ५१ ॥

अधिरोप्य गजस्कन्धं राजधानीं प्रदक्षिणम् ।
कारयित्वार्धराज्यं मे प्रादिशच्चोलभूपतिः ॥ ५२ ॥

विभज्य राज्यं भुञ्जानावर्धराज्यं नृपोऽप्यहम् ।
अभवावेति चित्रं तत्सार्वभौमावुभावपि ॥ ५३ ॥

अखण्डं चक्रवर्तित्वं खण्डितं नाश्रयद्भयात् ।
न ह्यधिष्ठानभेदेन भिन्नाग्नीषोमदेवता ॥ ५४ ॥

आसीन्मेऽभिजनान्मदः प्रथमतो विद्यामदोऽनन्तरं
ताभ्यां बद्ध इवाम्बरोन्मुखमुखः पश्चाद्गुणाभ्यां दृढम् ।
अक्ष्णोर्हा पटलायितो धनमदस्तैः पीडितोऽस्मि त्रिभिः
पन्था नैक्षि शुभावहो न च गुरुः षण्मासंसेवापरः ॥ ५५ ॥

अज्ञानान्धतमिस्रनिर्भरतरे साम्राज्यगर्तान्तरे
भोगान्धावटसंकटे हरिणदृक्कालाहिभिर्भीषणे ।
रामोऽन्तर्निपतन्तमन्तरहितं तान्तं नितान्तं हठात्
कूपान्तः पतयालुमाशु तनयं मातेव मामग्रहीत् ॥ ५६ ॥

इत्थं चित्रचरित्रवर्णनसुधापूरैः कृपोज्जृम्भितैः
पादाम्भोरुहसक्तचित्तमधुपानुज्जीवयन् संश्रितान् ।
कावेरीतटमार्गतः सरभसं रङ्गक्षमामश्रितो
रङ्गेन्द्रं प्रणमन्नवर्तत चिरं श्रीयामुनार्यः सुखी ॥ ५७ ॥

तदनु तुण्डीरमण्डलाखण्डलस्य कस्यचिदखण्डसाम्राज्यलक्ष्मीभृतो भूमिभृतः कुमारिकाया ब्रह्मरक्षसो विमोक्षणाय राजपुरुषैः सबहुमानमभ्यर्थितेन मान्त्रिकताप्रभवदिगन्तरनिरन्तरलसमानासमानयशःप्रकाशेन यादवप्रकाशेन स्वाहोपुरुषिकया परुषमुक्तं स्वनिष्कासवचनं श्रुत्वा स्मित्वा तेन रक्षसा त्वमेव गच्छेति साधिक्षेपमुपक्षिप्तं दुःश्रवं परिभववचनं समाकर्ण्य निकामं क्रोधार्तः स्वयमेव निर्जगाम सच्छात्रविततिः स यतिः ।

संप्राप्तं राजगोष्ठीमनुगुणपठनव्यग्रमुग्रं समग्रं
धिक्कृत्य ब्रह्मरक्षः पदमपि सहसा कुञ्चितं संप्रसार्य ।
भूयो मन्त्रान् ब्रुवाणं स्वयमहमभवं यज्ञभङ्गेन रक्षो
गौधेरस्त्वं बुधोऽभूः फणिपधरणिभृद्वन्तृभुक्तांशभुक्त्या ॥ ५८ ॥

अयं साक्षाल्लक्ष्मीरमणपरिचर्यैकरसिको
महान् सूरिर्भूमावखिलजनरक्षार्थमुदितः ।
कृशाङ्गः प्रत्यूषद्युमणिरमणीयद्युतिधरः
पदाम्भोजे कृत्वा शिरसि मम मोक्षं वितरतात् ॥ ५९ ॥

उदीर्येत्थं रामावरजचरणाम्भोजयुगलीं
शिरोभूषां कृत्वा भजत भवभीतिर्व्यपगलेत् ।
इति स्वैरुद्घोषैर्वमदिव मदं यादवपते-
र्महाश्वत्थं भङ्क्त्वा युगपदगमन्मोक्षपदवीम् ॥ ६० ॥

अहल्या कौसल्यातनयचरणाम्भोजरजसा
पुरा शापान्मुक्ता मुदितहृदया गौतममगात् ।
इदानीं श्रीरामावरजपदपाथोजरजसा
हठाद्रक्षोमुक्ता रमणमभजद्राजतनया ॥ ६१ ॥

अशिक्षयल्लक्ष्मण एष लक्षयन्
स्वमायया पीडितवन्नृपात्मजाम् ।
स मेघनादप्रदमुद्भटं हठात्
कठोररक्षस्तदिदं हि युज्यते ॥ ६२ ॥

अनादिपापवासनानिरूढदुर्विमोचन-
प्रपञ्चकर्ममोचने पटीयसोऽस्य का प्रथा ।
विमोचनेन रक्षसो विदारितेभमर्मण-
श्चमूरुदारणाद्यशः किमस्ति वारणद्विषः ॥ ६३ ॥

इति प्रशस्य लक्ष्मणं विचक्षणं विलक्षणं
पुरस्क्रियां चमत्क्रियामवेक्ष्य लम्भितं पराम् ।
सयादवाः सभूधवाः ससाधवो दयालवो
ममज्जुरद्भुतार्णवे नितान्तमाशु मानवाः ॥ ६४ ॥

अथ कदाचिदभेदश्रुतिवाक्यभावबोधनं विदधाने तस्मिन् मठाधिनेतरि,

अभ्याचष्ट स्पष्टमद्वैतवाचां
धृष्टो हृष्टः शिष्टगोष्ठीं प्रविष्टः ।
धिक्कुर्वाणस्तं कुदृष्टिं विशिष्टा-
द्वैतार्थत्वं लक्ष्मणार्यो यथेष्टम् ॥ ६५ ॥

कठोरमिदमाकर्ण्य कुठारं स्वेष्टभूरुहाम् ।
स मठी शठधीरेनं हठाल्लक्ष्मणमत्यजत् ॥ ६६ ॥

तदनु,

आन्वीक्षिक्यां प्रचण्डः फणिरमणवचोव्याक्रियाचक्रवर्ती
मीमांसासार्वभौमः श्रुतिशिखरपरिष्कारहीरायितोक्तिः ।
वेदेषु व्यासकल्पः स्मृतिषु मनुसमो वत्स पूर्णोऽसि मत्या
काञ्चीपूर्णानुमत्या भज वरदमिति प्रेरितो मातृवाचा ॥ ६७ ॥

काञ्चीपूर्णानुसारी करिशिखरिशिरोभूमिभूषायमाणं
बाहाशाखाभिरामं विबुधबहुमतं देवराट्पारिजातम् ।
आविर्भावं विकासं जगति सुमनसां सत्फलं चापि लब्धुं
शालाकूपाम्बु दत्त्वा सरुचि परिचरन् लक्ष्मणार्यो रराज ॥ ६८ ॥

———

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्राज्यपट्टाभिषिक्त-कल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्रबन्धनिर्माणधुरीणश्रीमद्रा-मानुजदेशिकसार्वभौमचरणारविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्या-वैशद्येन तत्सागर्भ्यविभूषणब्रह्मर्षिचर्यभावनाचार्यविबुधवर्यतनूभवेन रामानुजदासेन विरचिते श्रीरामानुजचम्पूप्रबन्धे चतुर्थः स्तबकः ॥

———

अथ पञ्चमः स्तबकः

श्लाघ्यः सर्वजनैर्विचित्रचरितः श्रीलक्ष्मणार्याग्रणी-
र्विद्वन्मौक्तिकहारनायकमणिस्त्रय्यन्तरक्षामणिः ।
हस्तिक्ष्माधरमस्तकोज्वलमहामेघं कृपाम्भोभृतं
नित्यं चातकवद्भजन् परिचरन्नेधांबभूव क्षितौ ॥ १ ॥

यामुनमुनिरपि श्रीरङ्गमङ्गलमाश्रितचिन्तामणिमनुदिनं सविनय-माराधयन्नन्तेवासिनां तत्त्वहितपुरुषार्थावबोधं निराबाधं समेधयन् धिषणावधीरितधिषणस्य भूमितलभूषणस्य विरचितविपक्षदूषणस्य प्रतिवादिभीषणस्य विख्यातवैदिकलक्षणस्य लक्ष्मणस्य शमदम-प्रमुखकल्याणगुणभासुरस्य भूसुराग्रेसरस्यावेक्षणक्षणादारभ्य तस्मिन् दृढघटितप्रेमभरः सकलचेतनसुकृतकृताविर्भावायाः स्वचिन्तालवा-लवलयकलितप्रतिष्ठाया वारणक्ष्माधररमणचरणोपघ्नकल्पक्षोणीरुह-समारोहणसंभूतविजृम्भणाया महत्याः प्रपत्तिकल्पलतायाः फलो-द्गमं प्रतिक्षणं प्रतीक्षमाणो लक्ष्मणार्याभिमुख्यवार्ताहरणकौतूहल-भरेण काञ्चीपुरीपरिष्कृतां कौबेरीं ककुभमेवेक्षमाणः कथंचन कंचि-दनेहसं समतिवाहयांचक्रे ।

अनन्तरमित्थं बहोः कालादारभ्य कृषिं कुर्वाणस्यास्मद्दर्शन-क्षेमकृषीवलस्य विदिताखिलजीवजीवनचापलस्य यामुननामभृतो योगिक्ष्माभृतः फललाभसमयः संनिदधे ।

निदधे च पदमधिरङ्गं काञ्चीपुराद्द्वन्द्ववैभवं श्रीवैष्णवद्वन्द्वं प्रियाख्यानोन्मुखं सुमुखम् ।

वेदान्ताविव तौ दान्तावद्भुतां वैष्णवावुभौ ।
वज्रकण्ठावेककण्ठं श्रीरामानुजवैभवम् ॥ २ ॥

'सोऽयमस्मत्पक्षरक्षादक्षिणाः कृतलक्षणाः ।
प्रतिपक्षप्रतिक्षेपदक्षाः कक्ष्याः प्रवक्ष्यति ॥ ३ ॥

अनादिवाणीरमणीं कल्याणगुणशालिने ।
ददौ वराय माङ्गल्यसूत्रिणीं स्मृतिशोभिनीम् ॥ ४ ॥

कदाचित्समूलकाषंकषितकलिपुरुषोत्प्रेक्षितमृषावादिमतसरण्या कर्णयोस्तसनाराचलताव्यथाकारिण्या दारुणदारणवैखरीधरण्या गिरां धोरण्या हृदयदारुमर्मणि विदार्यमाणो महता मत्सरेण विदीर्यमाणो नितरां निष्प्रकाशो यादवप्रकाशो दावपावक इव जाज्वल्यमानः सहजसत्त्वभाजं गजराजमिव तं स्वसहवासदुर्विगाहगहनाभ्यन्तराद्बहिश्चकार । तदनु,

काञ्चीरमणमेवाञ्चन् काञ्चीपूर्णकटाक्षतः ।
कांचिन्मुदमुदञ्चन् स काञ्चीं नैव विमुञ्चति ॥ ५ ॥'

अथ यामुनमुनिः श्रीरामचरितमिव पवित्रं श्रीरामानुजचरित्रं कुशलवाभ्यामिव व्याहरद्भ्यां ताभ्यां कुशलाभ्यां श्रीवैष्णवाभ्याम-परिमितं धनधान्यगवादिकं प्रदायाभ्युदयनिर्धारणेन कृतानन्दार्णव-मज्जनः सज्जनोपलालितः पुत्रोत्सवमिव दर्शननिर्वाहकदेशिक-लाभोत्सवं परिपालयन्नेवमभ्यनन्दत्—

तुषारैरालोकैस्तिमिरभरभङ्गं विदधतं
कलाभिः संपूर्णं कुवलयहितं सत्पथरतम् ।
द्विजेन्द्रं श्रीरामावरजमभिनन्द्यं सुमनसा-
ममुञ्चत् स्वर्भानुः खर इव चिराद्यादवयतिः ॥ ६ ॥

गुणारामो रामावरजगुरुरुद्दाममहिमा
दुरापं संतापं क्षपयितुमुदीतः क्षितितले ।
समासिक्तो हस्त्यद्र्यधिपतिकृपाम्भोलहरिभि-
र्जवान्मुक्तो दैवाद्विलसतितरां यादवदवात् ॥ ७ ॥

अखण्डः श्रीखण्डक्षितिज इव रामानुजगुरुः
निजच्छायादूरीकृतभुवनतापः सुसुरभिः ।
भुजङ्गादुत्सङ्गाद्विषपरुषवाग्दूषिततरा-
द्विमुक्तस्तल्लाभः सुकर इति विज्ञातमधुना ॥ ८ ॥

ततः प्रभृति सिद्धं नः समीहितमिति शुद्धान्तःकरणसमाहितसिद्धान्तो दूरीकृतदुरन्तचिन्ताध्वान्तः प्रसन्नमतिर्यामुनयतिर्मनोरथसौधारोहणपरम्परारोहणपारीणमानसराजहंसः परमहंसपरिव्राजकाचार्यचूडामणिपरिषत्परिचर्यमाणचरणनलिनः कतिचिदहानि निनाय ।

तदनु कदाचिदार्त्या शिथिलीकृताशेषतोषपूर्त्या परमव्योमालंचिकीर्षुर्यामुनमुनिः श्रीरङ्गैश्वर्यधुरामुपनिषदर्थभरं च सुदूरं बोढुमक्षम एव रामानुजमुपात्ते निक्षेप्तुकाम इव तमानेतुं महापूर्णमित्थमभ्यचोदयत् ।

महापूर्ण श्रीमन्निरवधिकृपापूर्ण सुमते
ममाभ्यर्णं तूर्णं नय नयविदं साभ्यनुनयम् ।
विशिष्टाद्वैतं तन्मुखकमलसौरभ्यलहरी-
धुरीणं साम्राज्यं स्फुरति तदधीनं मुरभिदः ॥ ९ ॥

स चाचार्यनियमनं सुमनोमाल्यमिव मूर्ध्नि धारयन् सत्यं प्राप वेधोहयमेधोदयाभिधानीं राजधानीम् ।

महारम्भा रम्भा इव परबुधाटोपपटली-
र्मुदा भङ्क्त्वा भङ्क्त्वा विहरणपरं शास्त्रविपिने ।
गिरां गुम्भैस्तत्त्वप्रवचनचणैर्यामुनमुने-
र्वशं नीत्वा रामावरजगजमभ्यानयदहो ॥ १० ॥

तदनन्तरं पुरुषोत्तमनिवासानुकूलमुदीचीकूलं कनकसरितोऽधिष्ठाय नवाम्भोधरनिध्वानगम्भीरं हाहाकारकरम्बितं संस्कृतद्राविड-

वेदसूक्तपारायणघोषमाकर्णयन् पद्माकरमिव गाहमानां राजहंसमण्डलीं, फलितरसालसालमिव श्रयन्तीं शुकावलीं, पुष्पितानोकहमिव सेवमानां मधुव्रतविततिमहमहमिकया यामुनमुनिमभिवेष्टयन्तीं महतीं श्रीवैष्णवगोष्ठीमालोकयन् अनुमानेनाप्तोपदेशेन च तस्य देशिकशिखामणेर्वैनतेयावतारस्य प्रोषितराजकुमारपुनर्नगरप्रवेशन्यायेन श्रीवैकुण्ठनगरीप्रवेशोपोद्घातमङ्गलोत्सववैभवमेतदिति विज्ञाय प्रमुषितप्रज्ञः प्रज्ञावतामग्रणीः कथंचिदवलम्बितधैर्यस्य महापूर्णदेशिकवर्यस्य गिरा समाश्वासितस्तच्चरणारविन्दावलम्बनेन भवाम्भोराशिपरपारप्रतिलम्भं भाविनं सूचयन्निव तत्करकमलावलम्बनेन कनकसरितः परं पारं प्रतिलभ्यास्ताचलचूडमवलम्बमानमिवाम्बरमणिं, शाम्यन्तमिवाशुशुक्षणिं, निस्तरङ्गमिव तरङ्गमालिनं, कण्ठलग्नतुलसीमालिनं श्रीवैष्णवश्रीशालिनं लक्ष्मीरमणकरुणातरङ्गिणीप्रथमतीर्थं यामुनतीर्थं गाढमवगाढोऽपि दुरापं संतापमवाप । तदनु,

कुदृष्टीनां दृष्टिप्रसरणभवां पङ्कपटली-
मपाकर्तुं शक्ता प्रसरति न चालोकलहरी ।
परीरम्भो लब्धो न भवपरितापप्रशमनो
न क्लृप्तः संलापः सकलविशयध्वान्ततपनः ॥ ११ ॥

करस्थं हा रत्नं व्यपगतमहो पात्रनिहितं
हठादन्नं स्कन्नं बत विघटितो जीवनघटः ।
फली वृक्षो वृक्णः कथममृतसिन्धुर्मरुदभूत्
प्रदीपो हा हन्त प्रशममुपयातः समजनि ॥ १२ ॥

प्रलापैर्भूयोभिः किमिह यदिदं मङ्गलतरं
विमानं श्रीरङ्गं परमिव पदं रङ्गनृपतेः ।
पवित्रं ब्रह्माङ्गप्रवरवपुरंहःप्रशमनं
स्पृशेयं धन्योऽहं पदकमलमुन्नम्य शिरसा ॥ १३ ॥

एवं बहुविधैः प्रलापैर्लब्धावकाशतया प्रादुर्भविष्यतां प्रभविष्यतां कलितमःपिशाचानामुच्चाटनाय प्रवृत्तैरिव मन्त्रघोषै-

दिङ्मुखानि मुखरयन् पुनरपि सत्त्वकलमप्ररोहणबीजार्पणायेव धारालगलद्बाष्पाम्भोधाराभिर्भुवो धूलीजालं जम्बालयन् दुर्भरदुःखभरादिव भूयो भूयः प्रणिपातानारचयंस्तच्चरणारविन्दद्वन्द्वोत्तंसनेन निजमुत्तमाङ्गमन्वर्थयन् कथंचिदवष्टब्धधैर्योऽपि लक्ष्मणगुरुवर्यः कराम्बुजाभ्यामश्रुपूरमपनीय दृगम्बुजाभ्यामापादचूडमाचार्यदिव्यमङ्गलविग्रहं सुदर्शनमिवाखिलतमःकर्शनं दुर्लभतरदर्शनं निर्निमेषमालोकयन् स्वात्मनः शुभाश्रयतया हृदयपुण्डरीके निधातुं निबद्धादरं नितरां निदध्यौ ।

तदनु किमियं दक्षिणकराम्बुजाङ्गुलिदलत्रयी चिदचिदीश्वरतत्त्वत्रयप्रकाशकत्रयीसारमन्त्रत्रयपरिगणनानुसारिणी लक्ष्यते ? किमिदमाजानसिद्धम्? आहोस्विदौपाधिकम्? पुराणं नवीनं किं वानवरतचिन्तास्पदमाचार्यचरणानां प्रायेणेति साभिप्रायं परिषदमपृच्छदार्यमिश्राणाम् ।

इत्याकर्ण्य गिरं तस्य लक्ष्मणस्य सुधाकिरम् ।
ससंभ्रमं यामुनार्यभावज्ञास्ते व्यजिज्ञपन् ॥ १४ ॥

अशोष्या गम्भीरा प्रवहति नदी व्यासफणितिः
प्रवृत्ता वेदाद्रेः परमपुरुषाब्धिं श्रितवती ।
मदान्धैर्गन्धेभैः क्षुभितहृदया पङ्किलतमा
प्रसादं तां नेतुं वचनकतकैः कः प्रभवति ॥ १५ ॥

निर्धूताखिलदुर्गुणः शुभगुणग्रामाभिरामो जग-
न्निर्माणावनभञ्जनादिरसिको विष्णुः परो मोक्षदः ।
इत्याख्याय पराशरः स्फुटतरं चक्रे पुराणोत्तमं
तन्नाम्ना मणिनेव काञ्चनमियात् कश्चिद्विपश्चिद्रतिम् ॥ १६ ॥

दिव्यं श्राव्यमभव्यभव्यभिमुखीकारप्रियंभावुकं
सर्वान्यवचोविवेचनचणं हैयंगवीनोपमम् ।
निर्माय द्रमिडप्रबन्धमनघं नारायणं कारणं
व्याचक्रे शठजित्तदाह्वयधरः कश्चिद्विधेयः सुधीः ॥ १७ ॥

इत्थमार्यमिश्राणां प्रतिवचने प्रवर्तमाने,

अमीभिः श्रीकाञ्चीरमणशरणागत्यवसरे
कटाक्षो विख्यातो मयि विनिहितः स्यादयमिति ।
क्षमेतायं कर्तुं त्रितयमिति रामानुजगिरा
तदङ्गुल्यस्तुङ्गास्तमपि भुवि तुङ्गत्वमनयन् ॥ १८ ॥

ततः सर्वेऽपि रामानुजगुरुणाऽस्मद्दर्शनोन्मीलनस्याचार्यकराम्बुजोन्मीलनमेव निदर्शनमिति निर्धार्य धैर्यावष्टम्भेन जीवनकौतूहलभरं बिभरांबभूवुः । अनन्तरं गुरुरयं शोकगुरुरनुतापाङ्गारचुम्बितहृदयः सहृदयोऽप्यस्तमितान्योपलम्भः कृतात्मोपालम्भः सुलभो न बभूव श्रीरङ्गनिधिसंनिधिनयनकुतूहलं वहतां महताम् ।

पुरो भाण्डं भग्नं हहह नवनीतस्य हरणा-
न्मया किं संवीक्ष्यो विगतकरुणो रङ्गरमणः ।
इति क्लेशाविष्टः समभजत काञ्चीमतिजवात्
परे रङ्गं प्राप्ता विरहविधुरा देशिकवराः ॥ १९ ॥

तदनु

महादेव्या दन्तिक्षितिधरपतेर्यामुनमुने-
स्त्रयाणामेतेषां प्रणयतटिनीनां जलनिधिः ।
अयं काञ्चीपूर्णः सुगुणपरिपूर्णो मुनिवरः
परित्रातेत्येतच्चरणशरणोऽवर्तत सुधीः ॥ २० ॥

अयं यामुनमूर्धन्यचरणसमाश्रयणधन्यदेशिकाङ्घ्रिशरणवरणमेवात्मनो हितकारणमिति सिद्धान्तयता शुद्धान्तःकरणेन विनयगुरुणा रामानुजगुरुणा स्फुटतरमित्थमभाणि—

अलभ्येयं लब्धा विबुधमहिता पञ्चजनता
पुरस्तात्पञ्चत्वाद्रचय चतुरां पञ्चभिरिमाम् ।
प्रशस्तैः संस्कारैर्मणिमिव नितरां शाणकषणैः
कृतार्थां त्वं कर्तुं प्रभवसि कृपासागर विभो ॥ २१ ॥

तदनन्तरं श्रीकाञ्चीपूर्णो धर्मज्ञसमयश्रद्धापरिपूर्णस्तूर्णमिदमाकर्ण्य विनयभूषणं रामानुजसूरिभाषणं सान्त्वपूर्वमित्थं प्रत्यवादीत्—

तदद्धा मुग्धानां भवति हि विरुद्धा मतिरतो
व्यवस्था वर्णानां व्यपगलति भङ्गोऽपि भविता ।
मुरारेराज्ञाया इति चकितचेता मुनिरहो
न्यषेधीत् सर्वज्ञो वरदकरुणापूरसरणिः ॥ २२ ॥

अथ भगवद्बादरायणवाणीरमणीं न्यायमणिविन्यासरमणीयैः सुवर्णभूषणैर्भूषयित्वौपनिषदपरमपुरुषरमणपरितोषणचातुरीधुरीणां विधातुमुद्यम्य तन्मूल्यसिद्धये निगमान्तगर्भनिगूढनिक्षिप्तान् पूर्वाचार्यसुरक्षितानपि कलितमोविजृम्भणवैचित्र्यसंधुक्षितदुर्मतिभिः शरणीकृतदुर्गतिभिर्वैदिकघण्टापथलुण्टाकैर्दुर्वादिभिर्बलादुत्थाय कुस्तर्कदुर्मलैर्दूषितान् स्वकीयसत्तर्कशाणोल्लेखननिर्मलीकृतानपि कांश्चिदर्थविशेषान् संगृह्य काञ्चीवल्लभवणिक्परिवृढपरीक्षया शोधयितुं वणिग्वर्णेऽवतीर्णं श्रीकाञ्चीपूर्णमेवाभ्यचोदयल्लक्ष्मणार्यचक्रवर्ती ।

श्रीरामानुजदेशिकाय किमहं दद्यामिति व्याकुलो
मह्यं पूर्णघटं प्रयच्छति किलेत्यालोचयन् देवराट् ।
काञ्चीपूर्णमुखानुयोगसुमुखस्तस्मै ददौ तत्क्षणं
षड्वार्तामणिमञ्जरीं निजमनःपेटीनिगूढां तदा ॥ २३ ॥

सेयं षडर्थी कृतार्थीकृतरामावरजविबुधवरमनोरथा धरातले बहुधा प्रथते । तथाहि—

परं तत्त्वं सोऽहं प्रपदनमुपायोऽन्तिमदशा-
स्मृतेर्नैवापेक्षा वपुरपगमे मोक्षगमनम् ।
विशिष्टाद्वैतं स्वं मतमपि महापूर्णभजनं
षडप्यर्थानेतानुपनिषदिवाहौपनिषदः ॥ २४ ॥

अथ तत्क्षणमेव लक्ष्मणदेशिको महापूर्णतटाकावगाह एव प्रसन्नमधुरगभीरशिशिराशययामुनतीर्थविरहविजृम्भितसंतापापनो-दनक्षम इति सिद्धान्तयंस्तस्मिन्नेव बद्धान्तःकरणः काञ्चीरमण-मभ्यनुज्ञाप्य काञ्चीपूर्णसंनिधौ विज्ञाप्य श्रीरङ्गं प्रति प्रतिष्ठमानो मध्येपथं मधुरान्तकतटाकतटीपरिष्कारं कासारपालकरामदेवागारं प्रसाधयन्तीं, मरालावलीमिव धारालश्रुतिहृद्यालापमनोहारिणीं सद्गतिधारिणीं विशुद्धपक्षावलम्बिनीं कमलाकरविहारिणीं काद-म्बिनीमिव जीवनदायिनीं सन्मार्गसंचारिणीं सारस्वतामृतहारिणीं श्रीरङ्गराजकरुणातरङ्गिणीतरङ्गपारम्परीमिवाभ्यागतां महतीं श्री-वैष्णवगोष्ठीं गरिष्ठामवद्यकथाया दविष्ठां कल्याणगुणभूयिष्ठां नेदिष्ठामभिवीक्ष्य विस्मेरधीस्तन्मध्यमध्यासीनं षोडशकलापूर्णं ताराभ्यन्तरभासुरमिव राकाहिमकरं सकलकल्याणगुणपूर्णं महापूर्णं लोचनचकोरयोरतिथीचकार ।

अवगाह्य महातीर्थमभ्यागत इवाग्रतः ।
महापूर्णं प्रपन्नोऽयं कृतार्थोऽस्मीत्यमन्यत ॥ २५ ॥

अश्रद्रोमाश्रपालीकवचिततनुभृन्निर्भरानन्दबाष्प-
स्यन्दिप्रोन्निद्रपङ्केरुहदलविलसन्नेत्रयुग्माभिरामः ।
भूयो भूयः प्रणामांश्चरणकमलयोः श्रीमहापूर्णसूरेः
कुर्वन्विस्मेरचेता विबुधकुलमणिर्लक्ष्मणार्योऽभ्युवाच ॥ २६ ॥

धन्यो भवामि तव पूर्णगुरोः प्रसादा-
न्नान्यो भवामितशुचः शमनो विना त्वाम् ।
मत्संनिधानमयता त्वरया त्वयाद्य
गोवत्सनीतिरनघा प्रकटीकृताभूत् ॥ २७ ॥

आर्तत्राणप्रणेतेत्यनुपममहिमोत्सेधशङ्का-
कलङ्कव्याख्यातीं मामकीनां प्रणयरुषमहो रङ्गिणोचाटयिता ।
नूनं श्रीयामुनार्यप्रतिनिधिरधुना तत्कृपापूर्णपात्रं
पूर्णार्य त्वं महीयान्निधिरिव पुरतो दूरतः प्रेरितो मे ॥ २८ ॥

श्रीमद्यामुनसंयमीन्द्रचरणाम्भोजातयोः संश्रयं
लब्धुं भाग्यमहो मया न कृतमित्युद्वेलचिन्ताकुलम् ।
काञ्चीपूर्णमुखेन काञ्च्यधिपतिः संचोदयामास मा-
मञ्चन् श्रीघनपूर्णदेशिकमणिं धन्यो भवेत्यञ्जसा ॥ २९ ॥

परिम्लानं चण्डातपभरवशादुत्पलवनं
हिमार्द्रैरालोकैस्तपयति यथा शीतलरुचिः ।
तथा तापैस्तप्तं विनतमभिषिञ्चन्नचिरात्
कृपार्द्रैरालोकैः कृतनवसुधागर्वहृतिभिः ॥ ३० ॥

इत्थं प्रणिगदन्तमसकृत्प्रणिपतन्तमनन्तप्रेमभाजनं रामानुजमनुरञ्जयन्नाविष्कृतान्तरङ्गैरपाङ्गामृततरङ्गैरभिषिञ्चन् भुजगपरिबृढभोगाभोगशालिभ्यां भुजाभ्यां दृढं परिरभ्य ससंभ्रममुत्थाप्येत्थमभाषत—

श्रीकाञ्चीरमणगिरा त्वमभ्युपेतः
श्रीरङ्गप्रभुवचसाऽहमागतोऽस्मि ।
संजातः स्फुटमयमावयोरिदानीं
संभेदो गुरुचरणप्रपत्तिभूम्ना ॥ ३१ ॥

श्रीरङ्गराजविज्ञप्तिकरादीनां विपश्चिताम् ।
मत्प्रेरकाणामाचार्यमिश्राणां सफलः श्रमः ॥ ३२ ॥

श्रीरङ्गराजसाम्राज्यलक्ष्मीरक्षीणवैभवा ।
अद्य प्रभृति धीरेन्द्र सनाथा भवतैधताम् ॥ ३३ ॥

आचक्रवालमवनीवलये वैष्णवश्रियः ।
निष्प्रत्यूहं विजृम्भन्तां निहृतारिविभूतयः ॥ ३४ ॥

इति लक्ष्मणपूर्णार्यावन्योन्यं प्रेमनिर्भरम् ।
चिरविप्रोषितौ पुत्रजनकाविव संगतौ ॥ ३५ ॥

तदनु महापूर्णः कृपापूर्णस्तूर्णमभ्यर्णे वारणाचलशिरोमणेर्देवशिखामणेरेव देहिपरित्राणकृतावतारसुधीसारपरमपवित्रे सत्यव्रतक्षेत्रे प्रपञ्चपावनविरिञ्चिहयमेधसचरित्रे सकलसज्जनावस्थानपात्रे

भवतः समाश्रयणविधिर्भवतादित्यभाणीत् । तदनु लक्ष्मणसूरिरित्थं सत्वरातिशयं समुद्घाटयामास—

आचार्यकं कलयते तटितां शरीरं
श्रेयोऽन्तरायशतवागुरया परीतम् ।
आचार्यपादविषये फलितं किलेदं
तत्क्षिप्रमेव मयि कल्पय पूर्णदृष्टिम् ॥ ३६ ॥

गिरमेनामतिगभीरामाकर्ण्य कर्णामृतमतीव श्लाघमानो मोदमानः—

शठारातिमाल्यप्रदानप्रशस्त-
क्षमाजातमूले तटाकस्य कूले ।
तटाकेशविष्णोः समक्षं जिताक्षं
कृतार्थं व्यतानीद्गुरुर्लक्ष्मणार्यम् ॥ ३७ ॥

अनन्तरमित्थं प्रार्थयामास—

तटाकमिव गम्भीरं रक्ष लक्ष्मणदेशिकम् ।
अयं हि प्राणिसस्यानां पोषकः संभविष्यति ॥ ३८ ॥
प्रमाणानां मूर्धाभरणमुदितः षट्पदमनुः
प्रमेयाणां मुख्यं करिगिरिशिरोमण्डनमणिः ।
प्रमातॄणां चूडामणिरपि भवानेव भुवने
गुरुः पृष्टस्तुष्टस्त्रितयमिदमाचष्ट कृपया ॥ ३९ ॥

तदनु रामानुजः स्वकृतार्थतामित्थमनुसंदधे—

आदावङ्कुरितः कृपारसमयैः श्रीयामुनालोकनैः
पश्चात् पल्लवितो गजाचलपतेर्वीक्षासुधावृष्टिभिः ।
काञ्चीपूर्णमुनेः कटाक्षपटलैः प्रेमोज्ज्वलैः पुष्पितो
मद्भाग्यामरभूरुहोऽद्य फलितः पूर्णार्यपूर्णेक्षया ॥ ४० ॥
अञ्चन्काञ्चीं मणिरिव महापूर्णनामा महार्घः
श्रीमान्रामावरजगुरुणा तेजसेवाभिरामः ।
काञ्चीपूर्णप्रमुखसुदृशां लोचनानन्दपातं
हस्तिक्ष्माभृत्परिबृढपुरस्कारधन्यो व्यलासीत् ॥ ४१ ॥

अस्मत्पक्षं प्रथयितुमयं लक्ष्मणो दक्षिणोऽभू-
दाचार्याणां शरणवरणं सांप्रतं सार्थमासीत् ।
सर्वाभीष्टप्रद इति यशोडिण्डिमस्ताड्यतां ते
शेषाध्वानं नय करुणया वारणक्ष्माधरेन्दो ॥ ४२ ॥

इत्थमभीष्टवरदमभिष्टूय लक्ष्मणदेशिकेनाहंक्रियावैदेशिकेन प्रेमप्रद्राणहृदयनवनीतेन नितान्तविनीतेन स्वभवनमानीय परिपाल्यमानो महापूर्णः परिपूर्णमनोरथश्चिरमुवास ।

अगृह्णाल्लक्ष्मणार्योऽयं भक्तिमूल्येन पूर्णतः ।
महार्थं मन्त्ररत्नादि निगूढं निजसद्मनि ॥ ४३ ॥

एकदा तु रामानुजजायायाः समजायतयौगपद्येन कूपाम्भोग्रहणे स्वाचार्याणीमधिक्षिपन्त्या वागसिस्फुरणकेलिः । सा चेत्थमुद्घोष्यते—

गुणं घटकसंगतं कमपि बिभ्रतीं जीवन-
ग्रहैकचतुरां सतीं समवलोक्य पत्नीं गुरोः ।
बृहच्चरणवंशभागिति कठोरवादोन्मुखी
बृहच्च रणमातनोत्प्रकृतिनिष्ठुरा निर्भया ॥ ४४ ॥

तदिदमाकर्ण्य कर्णपरुषं भिया पूर्णो महापूर्णो महापचारः संवृत्त इति स्वात्मानं गर्हमाण एकगृहवासः स्नेहानोकहस्य कठोरः कुठार इति महतामुद्घोषः सांप्रतं प्रमाणपदवीमध्यारूढ इति हृत्तापदावपावकदन्दह्यमानमानसस्तत्क्षणमेवानिवेद्यैव विश्रुतशिष्यलक्षणायापि लक्ष्मणाय सजायः श्रीरङ्गराजधानीं प्रसाधयांचक्रे । तदनु रामानुजसुधीमणिरपि 'किमिदमकाण्डे निर्गमनमाचार्यपादानाम् ? किमपराद्धं दासेन ?' इत्याचार्यापचारचकितचेता निजचकोराक्षीचरितमेतदिति विचार्य किमाचरितमेनसामाकरेणानयेति तामलातारुणत्विषा चक्षुषा प्रदहन्निव निर्भत्सयन्नकुत्सयत् ।

पुरस्तात्काञ्चीपूर्णभुक्तशिष्टसुधास्वादकुतूहलेन तं भोक्तुमामन्त्र्य वीथ्यन्तरेण तमानेतुं प्रयाति मयि मदाशयाभिज्ञः स

काञ्चीपूर्णमुनिर्वर्णव्यवस्थाभङ्गभिया त्वयादागत्य व्यजनवीजन-समयातिपातव्याजमाविष्कृत्य त्वया समर्पितमन्नमास्वाद्य तूर्णं वरदाभ्यर्णमभिविन्दति सति निन्दितचरिता त्वम्,

अभाग्यच्छलतोऽमलं स्वभाग्यच्छलसंनिभम् ।
निरस्य दण्डतः स्नाता मदभीष्टमजानती ॥ ४५ ॥

अनन्तरं च,

अभ्यञ्जनाकल्पनखेदजात-
स्वेदाम्बुपूरार्द्रसमस्तगात्रम् ।
अन्नाभिपूर्णं व्यतनोर्न पात्र-
मन्नाभिपूर्णं विरचय्य पात्रम् ॥ ४६ ॥

इदानीं च,

आचार्याणीघटघटनतः स्वं घटं मोचयन्ती
निन्दती तां परुषवचनैः स्वाभिजात्याभिमानात् ।
मुक्तिं मुक्तामणिमिव करे कल्पितामल्पभाग्या
दूरात् क्षिप्त्वा निवससि कथं सर्वलोकापहास्या ॥ ४७ ॥

तदनु,

आगस्त्रयेन्धनसमिन्धनवर्धमान-
कोपानलोल्बणविशीर्णकणोपमानैः ।
आलोकनैर्विजितकोकनदैः स धीमा-
नुल्काकणैर्गजवधूमिव संप्रताप्य ॥ ४८ ॥

वाचा रुषा परुषया कशयेव घोटी-
मारोप्य भारमिव भूरि घनं वधूटीम् ।
निष्कास्य निर्भरतया मुमुदे तदानीं
रामानुजश्चरममाश्रममाप्तुकामः ॥ ४९ ॥

तदनन्तरमातिथ्यादिक्रियानर्हाननुकूलभार्यात्यागस्मरणप्रामाण्य-प्रतिष्ठापनविचक्षणो लक्ष्मणोऽयमनन्तक्लेशसंभूतिं संसृतिं कुत्सय-न्नित्थमुदाजहार—

किमानीता ज्वाला ज्वलति महती बाडवमुखा-
द्विषोद्गारक्रूरा किमु विहरते कालभुजगी ।
समष्टिः पापानां किमुत कृतपुष्टिस्तनुमती
मृगाक्षी तृष्णां हा दिशति मृगतृष्णेव जगति ॥ ५० ॥

अथ,

त्रयाणां पापानां जननसदनादात्मभवना-
द्दवज्वालामालावलयितदिगन्तादिव वनात् ।
बहिर्गच्छन् घोषं कमपि कलयन् बृंहितरव-
प्रभावं स्नातोऽभूत्फणिसरसि रामानुजगजः ॥ ५१ ॥

तत्क्षणमेव लक्ष्मणदेशिको विषयवासनावैदेशिको विना विद्याशरधिं दाशरथिं स्वभागधेयमिव सरूपधेयं विधेयं भागिनेयं समस्तं संन्यस्तं मयेति व्याहरन् विदुषां परिषदि प्रेषं सप्रतोष-मुच्चतरबाहुरुच्चैरुच्चारयामास ।

एतदुपज्ञमेव दाशरथिगुरोरजहद्भागिनेयत्वसंबन्धनिबन्धन-प्रभावमुद्भावयत् हृद्यपद्यमिदमभियुक्तैरभ्यधायि—

इतरसुलभा किमेषा
भाषा वाधूलदाशरथिरेकः ।
न परित्यक्तस्त्यजता
बन्धूनिति सदसि लक्ष्मणार्यकृता ॥ ५२ ॥

तदनु,

श्रुतिश्रेणीपाणिग्रहणविधिनिःसाणनिनदै-
र्विशिष्टाद्वैतश्रीविजयपटगम्भीरनिनदैः ।
मृषावादश्रद्धाधवलगरुदम्भोधररवै-
स्त्रिभिः प्रेषोद्घोषैः करिगिरिभृदामन्त्रित इव ॥ ५३ ॥

त्रिदण्डकाषायघटीपटीमुखं
समस्तसंभारभरं वरप्रदः ।
प्रदाय योगीन्द्रममुं हठाद्व्यधात्
स्वयं किमेतद्गुरुतार्थ्यभूद्यतिः ॥ ५४ ॥

दीव्यद्दिव्यशिखामणीनिभशिखाबन्धाभिरामोऽङ्गुली-
भूषाभूतपवित्रभासुरकरः पीताम्बराभांशुकः ।
श्रीमद्वेत्रलतात्रिदण्डललितः शुद्धोर्ध्वपुण्ड्रोज्ज्वलो
दत्तात्रेय इवापरो जनदृशां दत्ते स्म मोदावलीम् ॥ ५५ ॥

काञ्चीपूर्णमुखान्नत्वा प्रणम्य करुणानिधिम् ।
ताभ्यां बहुमतो रेजे श्रीमान् योगिवरः सदा ॥ ५६ ॥
श्रीमान् कलाभिः संपूर्णः संसारतमसोज्झितः ।
रराज सेवितः सद्भिर्नित्यं योगीन्द्रचन्द्रमाः ॥ ५७ ॥
निवृत्तः प्रतिबन्धो मे नानुबन्धोऽत्र लभ्यते ।
आर्याभीष्टत्रयीसन्धा त्रयीव स्यात्कथं मम ॥ ५८ ॥

इति चिन्ताभृति भगवति रामानुजयतिक्ष्माभृति क्षितिश्रुति-जन्मनीव रघुवरचरितविधायिनि,

कूरेशदाशरथ्यार्यौ साक्षात् कुशलवाविव ।
कुशाग्रबुद्धी कुशलावभ्याशं साशमीयतुः ॥ ५९ ॥
अमू प्रादाद्बुधश्रेष्ठौ वेदान्तार्थावलोकने ।
अन्तरङ्गतमे नेत्रे नेत्रे संयमिनां विधिः ॥ ६० ॥
विद्याकुटुम्बभरणे कर्तव्ये योगिभूभृतः ।
योगक्षेमाविव प्राप्तौ तावुभौ सूरिसत्तमौ ॥ ६१ ॥
रामानुजपदाम्भोजमाश्रितौ तौ विपश्चितौ ।
मधुव्रताविव तदा प्रमोदमभिजग्मतुः ॥ ६२ ॥

यौ किलेत्थं वर्णयन्त्यवताररहस्यविदः पुराविदः—

अध्यक्षं वीक्षमाणैरपि वचनसुधामाधुरीमुग्धचित्तै-
र्यत्कर्णौ कर्णभूषामणिपटलमिषाद्व्याकृतिज्ञैर्विमृष्टौ ।
सोऽयं कूरान्वयाम्भोनिधिहिमकिरणो वात्सलीकल्पशाखी
श्रीवत्साङ्काभिधानः प्रतिभटकरिणामङ्कुशीभूयमेति ॥ ६३ ॥

आन्वीक्षिक्याः प्रसङ्गे प्रतिकथकगणा यस्य पादारविन्दे
उन्नम्यालोक्य चक्षुः किमिह निवसतीत्युत्तमाङ्गे निधाय ।
आश्चर्याब्धौ न्यमज्जन् स किल गुरुमणिर्दाशरथ्यार्यनामा
वाधूलाग्र्यः प्रपन्नो जयति यतिपतेर्भागिनेयत्वकीर्तिम् ॥ ६४ ॥

श्रीमद्रामानुजाख्योज्ज्वलगुरुवपुषो भूजुषः कैटभारे-
र्मायावष्टम्भजृम्भत्प्रतिभटपटलीपाटवोच्चाटनाय ।
संप्राप्तौ चक्रशङ्खौ किमुत परभुजौ किं चतुर्बाहुभाव-
व्याख्यातारावुपेतौ किमु पदकमलोत्कण्ठितौ राजहंसौ ॥ ६५ ॥

तर्काभिख्यावतीभिः खरतरनखरश्रेणिभिः शोभमानौ
शास्त्रारण्यप्रचारप्रकटितविभवौ शुद्धभावप्रसिद्धौ ।
सिंहाध्यक्षौ मदान्धप्रतिभटकरटिव्रातधिक्कारदक्षौ
हर्षादुज्जृम्भमाणौ यतिधरणिभृतो राजतः पादभाजौ ॥ ६६ ॥

विषाणाभ्यामिव गजः पक्षाभ्यामिव पक्षिराट् ।
मृगेन्द्र इव दंष्ट्राभ्यां शृङ्गाभ्यामिव पुंगवः ॥ ६७ ॥

आभ्यामाचार्यमिश्राभ्यां दुर्गमः प्रतिवादिनाम् ।
वेदान्तचिन्तामातन्वन् रराज यतिभूपतिः ॥ ६८ ॥

अथ यादवप्रकाशः प्रतिदिनं देवराजभजनायाभ्यागच्छन् भगवद्रामानुजयोगिपुंगवश्रीवैष्णवसाम्राज्यलक्ष्मीवैखरीं प्रत्यक्षमवगच्छंस्तत्कटाक्षसुधासंधुक्षणसमुज्जृम्भितप्रबोधप्रकारः प्रायेण प्रह्वीबभूव ।

चिरात्काञ्चीकान्तप्रणमनपरा तत्करुणया
समुन्मीलत्सत्त्वा विगततिमिरा विस्तृतमतिः ।
भजन्ती तद्भक्तान् सभयविनयं भव्यचरिता
जनन्यासीत्काचित्कुशलजननी यादवयतेः ॥ ६९ ॥

विशिष्टाद्वैतज्ञप्रवरमुपविष्टं सह सदा
महाशिष्टैर्हृष्टैः शमयितुमरिष्टं तनुभृताम् ।
श्रियाविष्टं ब्राह्मया यतिपतिमभीष्टप्रदविभो-
र्विशिष्टं दृष्ट्वेयं घटितघनसंतुष्टिरजनि ॥ ७० ॥

कदाचिच्छ्वेतण्डक्षितिधरवरारोहणजुषः
स्वपुत्रः श्रीरामावरजमतभाक् स्यादिति मतिम् ।
वितन्वत्यास्तस्याः श्रुतिरिव शुभोपश्रुतिरभू-
द्दशायां सावधानात्तनयसुदशारत्नमिव ताम् ॥ ७१ ॥

अवादीद्वृत्तान्तं निजतनयविस्रम्भणकृते
न्यषेधीन्मायाध्वन्यनवधिममुष्याटनविधिम् ।
अनैषीत्पन्थानं यतिदिनकरेन्धानमचिरा-
न्निरुन्धानं तापं हृदयमदसीयं निपुणधीः ॥ ७२ ॥

त्रिदण्डी चूडालो विलसदुपवीताग्रग्रतुलसी-
मणिः पद्माक्षस्रक्प्रकटितभुजाभ्यन्तरतटः ।
शुभैरूर्ध्वैः पुण्ड्रैर्ललित इव रामानुजमुनि-
र्विशिष्टाद्वैतित्वं भज भवभयं मुञ्च झटिति ॥ ७३ ॥

नियुक्तो मात्रेत्थं स यतिरथ मायान्धतमसैः
समालीढं प्रौढं निरयमरुकान्तारघटने ।
कुदङ्मार्गं त्यक्त्वा सुदृगुचितवैकुण्ठनगरी-
घनज्योतिर्घण्टापथगमनकौतूहलमधात् ॥ ७४ ॥

शिखादित्यागैनःप्रशममवनीमण्डलमहं
परिक्रामन् कर्तुं न खलु चतुरः स्यां हि जठरः ।
कथं प्रौढिं पङ्गुर्गिरिशिखरमारोढुमयतात्
कथं धन्योऽहं स्यामिति विदुषि चिन्तार्णवजुषि ॥ ७५ ॥

चिरायौन्मुख्यं मय्यतनुत मृषावाद्ययमहो
मृषावादं सर्वं दलयितुमनारब्धसमयः ।
असिद्धं दृष्टान्तं कलयितुमिव स्वप्नमकरो-
द्वृतं काञ्चीपूर्णाद्यतिपतिपदाब्जाश्रयविधौ ॥ ७६ ॥

तदनु स यादवयतिरतिमात्रं प्रहृष्टमना द्विरदाचलनील-नीरदेन वरदेन स्वप्नदृशा काञ्चीपूर्णसुदृशा च सुव्यक्तमभिहितेन वचसा सान्त्वितः क्ष्मामण्डलीवोढुः परिवृढस्य फणाभृतामवतारस्य

श्रीरामानुजयतिक्ष्माभृतः प्रदक्षिणमेव क्षमाप्रदक्षिणप्रतिनिधिभावदक्षिणमिति तत्क्षणं निश्चित्य श्रीरामानुजचरणराजीवाश्रयणोज्जीवनाय सञ्जीबभूव ।

अथैकदण्डी स बभूव मुण्डी
क्षणात् त्रिदण्डी शिखया शिखण्डी ।
अमण्डि सूक्त्या यतिधर्मसार-
समुच्चयस्तेन परोऽप्यखण्डि ॥ ७७ ॥

दव इव परुषोऽयं यादवाख्यां दधानो
व्यरचयदतिमात्रं क्षात्रमेवात्र चित्रम् ।
इति किमु रमणीयामस्य गोविन्दसंज्ञां
जगदवनधुरीणां व्यातनोल्लक्ष्मणार्यः ॥ ७८ ॥

विशिष्टाद्वैतैकप्रवचनचणैर्न्यायविशिखै-
र्दृढं लग्नैर्मर्मोद्दलनपटुभिः शल्यकटुभिः ।
अहो मायाटव्या विदलितमदो यादवगजो
वशं प्राप्तो भूम्ना यतिपरिबृढाधोरणविभोः ॥ ७९ ॥

किमत्रास्यालम्बं त्रिनयनमताडम्बरहरं
त्रिलोकीत्राणार्हत्रियुगकरुणावल्लिविटपम् ।
त्रिदण्डं सेनेशस्त्रिगुणमिव वेत्रं करतले
त्रिवर्गप्रावण्यक्षपणनिपुणं बिभ्रदनघम् ॥ ८० ॥

वसानः काषायं वसनमरुणं पल्लवमिव
प्ररूढं वेतण्डक्षितिभृदनुरागं दृढमिव ।
परीतं वक्षोभूवलयमुपवीतेन कलयन्
यशःपारावारप्रसरदुरुवीचीरुचिभृतः ॥ ८१ ॥

कलानां संतानैरिव हिमरुचेरार्जवयुतै-
स्तटिद्वल्लीरेखाशकललसमानान्तरदलैः ।
शुभैरूर्ध्वैः पुण्ड्रैरुचितपदविन्यासमधुरैः
समुन्मीलत्सत्त्वाङ्कुरपटलशैलीप्रणयिभिः ॥ ८२ ॥

विराजद्रूक्मश्रीविहतिपदडोलाभतुलसी-
मणीपाथोजाक्षप्रवरसरयुग्मोज्वलगलः ।
शिखाबन्धं बन्धं द्रढयितुमशेषाग्रिमवचः-
शिखानां बिभ्राणो मणिमिव फणित्वात्प्रकटितम् ॥ ८३ ॥

घटीं बिभ्रत्पाणावमृतकलशीविभ्रमकरीं
जगन्मायारोगं शमयितुमिवाम्भोधिभिषक् ।
यतीनामीशानः श्रुतिशिखरपालीपरिमल-
प्रदानप्रागल्भीभरितफणितिर्भावुकमतिः ॥ ८४ ॥

महामायामग्नानपि कुमतिजाताञ्छठमतीन्
स्वसेवामाहात्म्यात्स्वमतनिरतान् साधु कलयन् ।
परिष्कुर्वन् काञ्चीं कमपि घटयामास मनसां
विकासं पद्मानामिव किरणमाली सुमनसाम् ॥ ८५ ॥

---

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्राज्यपट्टाभिषिक्त-कल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्रवन्धनिर्माणधुरीणश्रीमद्रामानुजदेशिकसार्वभौमचरणारविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्यावैशद्येन तत्सागर्भ्यविभूषणब्रह्मर्षिचर्यभावनाचार्यविबुधवर्यतनूभवेन रामानुजदासेन विरचिते श्रीरामानुजचम्पूप्रबन्धे पञ्चमः स्तबकः ॥

---

अथ षष्ठः स्तबकः

श्रीमान् यामुनसंयमिक्षितिपतेराज्ञां शिरोमालिकां
कुर्वाणो गुरुपुंगवैरनुसृतः संप्रेषितो रङ्गिणा ।
काञ्चीपूर्णमुखैः पुरस्कृततरः काञ्चीं समञ्चन् मुदा
तद्विज्ञप्तिकरस्य मन्दिरगतो रङ्गेशविज्ञप्तिकृत् ॥ १ ॥

स्तम्भान् पल्लवयञ्शिलाः सलिलयन्नास्थानमामोदयन्
मूढान् पण्डितयन् फणीश्वरमयीं शय्यां समान्दोलयन् ।
तालाभ्याममृतं किरन् विगलितं श्रोत्रेषु पात्रेष्वहो
सोऽयं द्राविडवेदगानचतुरो व्यामोहयत्तं हरिम् ॥ २ ॥

अथ भगवान् दन्तावलशैलशेखरालंकारमणिश्चिन्तितार्थवितरणचिन्तामणिराश्रितावनवरदोऽभीष्टवरदो गानमधुररसास्वादमत्तचित्तमधुव्रतः सत्यव्रतक्षेत्रसुत्रामा निरुपमप्रेमा विज्ञप्तिकृते श्रीरङ्गराजनामभृते यथाभिलषितमभीष्टं वितरामीति महतां परिषदि सन्धामाबध्यापि तदभ्यर्थितं कौस्तुभादप्यधिकं श्रीरामानुजगुरुमणिं वितरीतुमपारयन्नपारकृपाम्भोराशिरित्थमाबभाषे—

धनं वा रत्नं वा धरणिवलयं वाथ निलयं
स्वकीयं स्थानं वा परमनुत वा मामकवपुः ।
रथाङ्गं वा यद्वा जलजमथवा कौस्तुभमणिं
प्रदद्यां शार्ङ्गं वा न खलु वितरेयं यतिपतिम् ॥ ३ ॥

प्रसिद्धः शुद्धान्तःकरणललितो लक्ष्मणमुनिर्ममायं शुद्धान्तादधिक इति सिद्धान्तसरणिः ।
न दद्यामेनं ते न खलु भुवने क्ष्मापरिवृढा
महोदारा मानं ददति महिताश्चापि कृतिभिः ॥ ४ ॥

अथ विज्ञप्तिकृदग्रणीरित्थमभाणीत्—

द्विर्नाभिभाषस इति प्रथते प्रथा ते
संकीर्त्यते वरद इत्यपि नामधेयम् ।
दास्याम्यभीष्टमिति चाभिसभं त्वयोक्तं
तद्देहि लक्ष्मणगुरुं कुरु देहिरक्षाम् ॥ ५ ॥

विमुञ्चन् बाष्पाम्भः कथमपि निजाभीष्टवरद-
प्रथाभङ्गाशङ्कातरलितमना लक्ष्मणमुनिम् ।
अदात् काञ्चीपूर्णप्रमुखमुखमालोक्य भगवान्
जवादेनं लब्ध्वा निधिमिव स विज्ञप्तिकृदगात् ॥ ६ ॥

अप्रविश्य मठं योगी समानीय कृपानिधिम् ।
दाशरथ्यार्यमुखतः प्रतस्थे रङ्गमेदिनीम् ॥ ७ ॥

अनुपदमुपदाभिः पूज्यमानो महद्भि-
र्नयनरुचिसुधाभिर्जीवयञ्जीवराशिम् ।
अभजत पशुपालं देहलीकेलिशैलं
त्रिमुनिविनुतमेतल्लब्धसंमर्दसौख्यम् ॥ ८ ॥

रङ्गाभिवृद्ध्युन्मुख एष योगी
संजीवयामास जनान् पृथिव्याम् ।
केदारमापूरयितुं प्रवृत्तः
पूरो न किं सिञ्चति मार्गवृक्षान् ॥ ९ ॥

वीरनारायणस्येव करुणावरुणालयम् ।
वीरनारायणसरो मुनिर्वीक्ष्य विसिष्मिये ॥ १० ॥

तत्र चागण्यपुण्यपरिणामावेक्षणीयं श्रीरङ्गशायिश्रीराजगोपालादिदेवापेक्षणीयं श्रीमन्नाथमुनिप्रभृतिमुनिजनशरण्यं वरेण्यमरण्यमवेक्षमाणो यतिवरेण्यो विकस्वरमुखपुण्डरीको विगलदानन्दबाष्पतरललोचनो विरचिताध्वश्रममोचनः सहर्षमित्थं बभाषे—

अत्राविष्कृतमादरेण मुनिना नाथाभिधां बिभ्रता
मध्येकृत्य किलेश्वरं गुरुवरं तापापहं देहिनाम् ।
तीर्थं यामुनमद्भुतं विकलुषं पूर्णार्यसद्देशिका-
द्गम्भीरं सुलभं विगाह्य विगतश्रान्तिर्विशुद्धोऽस्म्यहम् ॥ ११ ॥

शिष्योऽमुष्य विशिष्य योगविषये वैदुष्यवान् भावयन्
कृष्णं भावनया हृदब्जकुहरे क्रीडन् मुहुश्चामुना ।
कुड्याभ्यन्तरमास्थितो हि कुरुकाधीशश्चकास्त्यार्तिहा
स्नातो भार्गवतीर्थवारिणि नतः श्रीवीरनारायणम् ॥ १२ ॥

श्रीमान् भार्गवतीर्थतीरनिलयः श्रीवीरनारायणः
साकं क्रीडति गारुडाश्मलतया ब्रह्मर्षिसंभावितः ।
सर्वाभीष्टफलप्रदाननिपुणो गीर्वाणभूमीरुह-
प्रौढिं कांचिदुदञ्चयन् विजयते सर्वांगमाभ्युच्छ्रितः ॥ १३ ॥

अयं हि पूर्वैराचार्यैरञ्चितः प्रेमशालिभिः ।
अहो भाग्यान्मदीयाक्ष्णोः पन्थानमधुनाञ्चति ॥ १४ ॥

अथ वीरनारायणं वीक्षावनविहारपरायणं सप्रणयं प्रणम्य श्रीयामुनमुनिपूर्वाश्रमसंबन्धसुगन्धबन्धुरां मन्दिरस्थलवसुन्धरामतिविततपक्केष्टकचितभित्तिभागभासुरामनारतप्रणामरतानेकभूसुराम - ग्रंकषामशेषकलुषसर्वंकषां दुर्वादिदुरभिमानकूलंकषां साभिलाषमनिमेषं चक्षुर्भ्यामापिबन् भूयो भूयो भूयसा विनयेन प्रणामानारचयन् वाङ्मनसयोरभूमिं कांचिन्मुदं बिभरांबभूव ।

अनन्तरं चेत्थमुपश्लोकयामास—

अलभ्यसौरभ्यतरङ्गपाली-
निरन्तराशान्ततुलस्युपेता ।
विभाति सज्जेव गुरूत्तमस्य
गृहस्थली विष्णुपदाञ्चनाय ॥ १५ ॥

पक्केष्टकानां पटली घनानां
भित्तिस्थिता भक्तिमतां नराणाम् ।
आरोहणश्रेणिरिवावभाति
वैकुण्ठपुर्याश्रयणानुकूला ॥ १६ ॥

दुर्वादिभञ्जनोपात्तविजयस्तम्भसंनिभम् ।
भवनं श्रीमदाभाति गुरोरभ्रंकषस्थलि ॥ १७ ॥

आचार्यभवनालोकतत्परं यमिनां वरम् ।
आचकर्ष बलादेनं विज्ञप्तिकरचोदना ॥ १८ ॥

कवेरकन्यातटमार्गमेत्य
प्रतिप्रवाहभ्रममावहन्ती ।
सशास्त्रघोषा यतिराजगोष्ठी
प्रमुत्तमागारतटीमटीकत ॥ १९ ॥

अविरलदलपालीशीतलच्छायसालां
तटभुवमधितिष्ठन् हेमनाम्न्यास्तटिन्याः ।
अनवधिपरितोषान्निर्निमेषं स धीमान्
पदमतनुत दृष्ट्यो रङ्गभूमीसमृद्धिम् ॥ २० ॥

अथेत्थमभ्यनन्दत्—

श्रीवैकुण्ठादिनानाविधनगरजयस्थापितस्तम्भडम्भै-
र्दीप्रप्राकारवद्भिः स्फुटविकटगरुद्भूमिभृत्प्रौढिमद्भिः ।
संदोहैर्गोपुराणां प्रबलपरिघया हेमनद्याभिवीता
वृक्षाद्यैः कायमानैरिव हरिविहृतेर्भात्यसौ राजधानी ॥ २१ ॥

शृङ्गाघातक्षतेन्दुस्रवदमृतझरीलब्धनित्याभिषेक-
प्रोद्भूतोद्दामगुञ्जच्छविरुचिरमहासौधपालिप्रतोलिः ।
बिभ्राणा केतनालीः प्रकटितवलभित्पट्टणाटोपभङ्गा
रङ्गाभिख्या पुरीयं रचयति नयनानन्दमन्यादृशं नः ॥ २२ ॥

गर्भे लोकाः समस्ता विदधति वसतिं यस्य सोऽयं मदीये
गर्भे क्वापि प्रदेशे निवसति भगवान् भोगिभोगे शयानः ।
मत्साम्यं जह्नुकन्या कथमिव लभतां पादसङ्गावलिप्ते-
त्युद्घोषं कल्पयन्ती कनकसरिदियं जाग्रती चाकशीति ॥ २३ ॥

श्रियः कान्तोऽनन्तः परमकृपया मादृशदृशां
स्फुटीकर्तुं भूमिं स्वमिव किल निन्ये निजपुरीम् ।
असौ श्रीरङ्गाख्यां वहति विरजा सह्यतनया-
मिषादेनां गाढं सततमुपगूह्य प्रवहति ॥ २४ ॥

श्रीरङ्गभूमीवलयं प्रवृद्ध-
स्वर्णापगावारिपरीतमेतत् ।
आनन्दवल्लीशतकालवाल-
लीलां दधानं नयने धिनोति ॥ २५ ॥

इत्यादिसूक्तामृतधोरणीभि-
रध्वश्रमं पादजुषां धुनानः ।
माध्यंदिनस्नानविधिं विधातुं
हेमापगायां कुतुकी बभूव ॥ २६ ॥

विशुद्धपक्षद्विजराजमण्डली-
मध्यस्थितोऽयं परमोऽथ हंसः ।
श्रुतिप्रियालापकलापशाली
सप्रेम हेमाम्बुजिनीं सिषेवे ॥ २७ ॥

अभ्यागतेव करुणा हरिणा प्रयुक्ता
मातेव वत्सलतया लहरी भुजैस्तम् ।
आलिङ्ग्य गाढमपनीय पथि श्रमं द्राक्
तूष्णीं सुवर्णतटिनी घटयांबभूव ॥ २८ ॥

अध्वश्रमं विनुनुदे कनकापगायां
संमज्जनं विरचयन् यतिसार्वभौमः ।
लोका भवश्रममहो विजहुस्तदानी-
मुन्मज्जनं समधिगम्य भवाम्बुराशेः ॥ २९ ॥

अभ्यन्तरोज्ज्वलतटिल्लतिकाजवाढ्य-
डिम्भेन्दुडम्भपरिखण्डनलब्धवर्णैः ।
मध्यस्थहेमकलधौतलतासवर्ण-
श्रीचूर्णकान्तसितमृत्कलितोर्ध्वपुण्ड्रैः ॥ ३० ॥

विभ्राजितो विमलसत्त्वगुणाभिराम-
शुभ्रोपवीतकमनीयभुजान्तरालः ।
ग्रीवाविलम्बितुलसीमणिवारिजाक्ष-
मालासनाभिशुभनाभिपुटाभिनन्द्यः ॥ ३१ ॥

लोकानुरागतरुपल्लवतल्लजाभ-
काषाययुग्मकमनीयतराङ्गयष्टिः ।
दीव्यत्त्रिदण्डपरिमण्डितपाणिपद्म-
स्त्रैलोक्यपुण्यपरिपाककृतावतारः ॥ ३२ ॥

सत्संमतैर्बुधवरैर्विमलात्मबोधैः
पूर्णानुरागभरितैर्विनतैरनेकैः ।
संसेवितो विरुरुचे यतिसार्वभौमः
श्रीरङ्गवासरसिकैरभिवन्दिताङ्घ्रिः ॥ ३३ ॥

अथ श्रीरङ्गचन्द्रः करुणासान्द्रः श्रीरामानुजयतीन्द्रसमागमवार्तासुधामास्वाद्य माद्यन्मनाः ससंभ्रमं सेनान्यं समाहूय परिजनं मान्यं पश्यामि मान्यं श्रीरामानुजमुनिमूर्धन्यमानेतुम्; त्वमेवाभिमुखं गच्छेति स्वच्छमतिमभ्यचोदयत् ।

अभ्युज्जगामाथ यतिक्षमाभृतं
श्रीरङ्गभर्त्रा प्रहितो बलाधिपः ।
भक्तानुयातः प्रबलानुकम्पया
स्वकीयभारार्पणभूरिकौतुकी ॥ ३४ ॥

अथ यतीनां पतिरतिमात्रं प्रहृष्टः शिष्टैः सह श्रीरङ्गभूरमणकरुणापात्रं करकमलोद्भ्रितकनकवेत्रं सकललोकमित्रं सूतवतीकलत्रं विकसत्पुलकगात्रमविरलगलदानन्दाश्रुपूरनेत्रं बहुकृत्वः प्रणम्य तेन बहुमानचक्षुषावेक्षितः श्रीमन्माल्यशेषापटीप्रभृतिभिः संमानैः पुरस्कृतः सर्वैरपि पुरस्कृतः कनकसरितं सरभसं समुत्तीर्य प्राचार्ययामुनाचार्यचरणारविन्दपरागपरम्परासुरभीकृतं संजीवितसाधुसार्थं तीर्थमाचम्य आनम्य च तन्निवासपावनं भवनं श्रीरङ्गोपकण्ठवनं सोत्कण्ठमधितिष्ठन्तमङ्कारोपितकम्बुकण्ठीकमाकण्ठकण्ठीरवं वैकुण्ठमकुण्ठभक्तिरासेव्य श्रीरङ्गपुरप्रवेशाभिनिवेशातिशयमेदुरो बभूव।

आभीरीदधिभाण्डगन्धलहरीर्वाराम्बुजातेक्षणा-
हारिद्रादिमसौरभाणि च मुदा जिघ्रन् कृतार्थो भवन् ।
तत्तद्वाञ्छितदानबद्धविरुदः स्मेराननाम्भोरुहो
देवो दीव्यति नारिकेलरसिको यो गोपुरस्याध्वनि ॥ ३५ ॥

तं दामोदरमादरेण कलयन् सौलभ्यमेवाङ्गभा-
गध्यक्षीभवतीति मोदमतुलं कंचिद्दधानो हृदि ।
बृन्दं बृन्दमुपागतानभिमुखं मूर्धावबद्धाञ्जली-
नालोकामृतधारया यतिपतिः सिञ्चन् वगाहे पुरीम् ॥ ३६ ॥

आबध्यन्ते पताकाः प्रतिगृहममलैः शीतलैर्वारिपूरैः
सिच्यन्ते च प्रतोल्यः किसलयनिकरैस्तोरणानि क्रियन्ते ।
कीर्यन्ते पुष्पपुञ्जा मिलदलिपटला धूपदीपप्रचाराः
कल्प्यन्ते वन्दिशब्दो मुखरयति दिशां चक्रवालान्तरालम् ॥ ३७॥

दीर्णं ब्रह्माण्डभाण्डं कलयति बहुलो वाद्यघोषः सतोषः
सेवासंनाहभाजां ध्वनिरपि च नृणामुज्जिहीते महीयान् ।
भूयो भूयः प्रणामान् विदधति बहवो भक्तिमन्तः स्तुवन्तः
कोऽयं प्रेमानुबन्धः समुदयति मदभ्यागमे मानवानाम् ॥ ३८॥

इति चिन्तीयमानहृदयः सुगुणसिन्धुभिरव्याजबन्धुभिरखिलकलाविद्भिर्विद्वद्भिरभिशोभितः श्रीरङ्गराजचरणाम्बुजावलम्बिभिरतिथिसत्काराविलम्बिभिरात्मविभवैः कुबेरविडम्बिभिः कुटुम्बिभिरधिष्ठितैरनवरतविहरदिन्दिरैः सौधमन्दिरैरवभासिताः कुतूहलिजनसंकटविशङ्कटशृङ्गाटकाः प्रेमपरवशप्रकटीकृतनाटका विपुलतरशाला विशाला विद्युल्लताविद्योतमानमणिदीपशिखा विशिखा विलोकमानो यामुनमुनिसमानो दिक्चतुष्टयाभ्यागतलोकालोकोन्मुखमुखचतुष्टयभृतश्चतुर्मुखगोपुरस्याग्रभुवि विरचितप्रणामो विजृम्भमाणागण्यपुण्यपरिणामोऽन्तः प्रविष्टः प्रहृष्टः श्रीरङ्गभूकमनसुमनःस्रग्दामस्तोमोद्दामपरिमलदानधौरेयालकामोदामनवधिकमोदां गोदामुदारधीरेवमभितुष्टाव—

सीतेव क्षितिसंभवा तुलसिकेवाबिभ्रती सौरभं
धिन्वन्ती जनकं यथा स्वजनकं श्रीविष्णुचित्तं द्विजम् ।
वेदान्तोदितसर्वगन्धविभवं सत्यापयन्ती विभोः
कैश्यामोदितमालिकार्पणवशाद्गोदेयमुज्जृम्भते ॥ ३९ ॥

नीला रूपवतीति तत्र महतीं प्रीतिं विधत्तेतरां
भक्तेति क्षितिरद्भुताकृतिरसौ गोदेत्यभिख्यावती ।
तद्वक्षोरुहभूमिभृद्वरतटीसुप्तं नृकण्ठीरवं
तं संबोध्य वशं स्वसूक्तिमधुभिर्नीत्वैवमाक्रीडति ॥ ४० ॥

इति स्तुत्वाथ हेतीशं हुताशमिव भास्करम्।
अस्तावीदादिमं वस्तु स्वस्ति प्रस्तौति यद्दधत्॥ ४१॥

वीरेन्दिरावसथकोकनदप्रकाण्ड-
मारात्रिकं किमपि रङ्गधुरंधरस्य।
आवर्तचक्रमिव तद्भुजतेजसोऽब्धेः
सौदर्शनं स्फुरति मण्डलमप्रमेयम्॥ ४२॥

वीरश्रीमणिभद्रपीठति महःकल्लोलिनीवल्लभ-
स्रोतोविद्रुममण्डलीयति यशोवल्लीप्रवालीयति।
बाहाकिंशुकशाखिकास्तबकति श्रीरङ्गिणस्तेजसो
ज्वालाचक्रति चक्रमाश्रितमनःपथोजिनीसूर्यति॥ ४३॥

अथ यत्यग्रणीरत्यादरेणाविरलपरिमललहरीलाभलोभमिलन्मिलिन्दपटलझंकारकोलाहलवाचालदिक्चक्रवालं शिखरावलीसंघर्षणदरदलितहिमकरमण्डलीकलशीधारालगलदमृतधारासनाथमकरन्दपूरपूरितालवालद्विगुणविजृम्भमाणरसालवकुलपनसासनदाडिमजम्बूजम्बीरनारङ्गमातुलुङ्गनारिकेलबिल्वामलकप्रमुखशाखिशाखासहस्रनिवारितातपजालं मालतीमल्लिकादिवल्लिकामतल्लिकाकुञ्जपुञ्जविलम्बमानमञ्जरीपरिशोभितान्तरालं लक्ष्मीक्षमासहचरश्रीरङ्गभूरमणसविस्रम्भणसंचारकेलिसमुचितविचित्रवितानशोभमानकायमानमिव विशालं क्रीडासरोऽभिरामसमन्तराराभं निकाममालोकयन्नभिजगाम सप्रेम श्रीरङ्गनायिकाधाम।

तदनन्तरं चिरन्तनसरस्वतीशिरोमणिं चिन्तितार्थवितरणचिन्तामणिं क्षीराब्धिशुक्तिमौक्तिकमणिं त्रिभुवनरमणीमणिं प्रसाधितरङ्गक्ष्मां रक्ष मामिति सरोरुहमन्दिरामिन्दिरां सादरं प्रणम्यैवमभितुष्टाव—

जय जय जगज्जननि जनताभीष्टजननि जलजालये जलनिधितनये कल्याणगुणमनोरसे रमे विश्वंभरावलयाभ्यन्तरमहत्तरनगरपरिष्कारसमुत्तुङ्गरम्यश्रीरङ्गहर्म्यभद्रपीठिके कावेरीपुलिनकेलीरसिककलहंसिके श्रुतिशिरःसीमन्तसिन्दूररेखिके चतुर्मुखशतमखप्रमुखबर्हिर्मुखमकुटोत्तंसरत्नकलिके भगवति श्रीरङ्गभूपरीबृढवल्लभे ब्रह्मादि-

दुर्लभे भक्तजनसुलभे करकलितपद्मे पद्मे त्वत्पादपद्मे शरणीकुर्वाण-मनन्यशरणं मां कटाक्षामृतस्रोतोभिरभिषिञ्च उदञ्चयानिष्कम्पामनु-कम्पां प्रपञ्चय कांचन शेमुषीमशेषदुरितदूरीकरणप्रौढीं समुपेयु-षीमञ्जसेति।

तदनु श्रीरङ्गनायक्या मातेव वात्सल्यप्रक्षालितहृदयया सादरं सपुरस्कारमालोकितस्तद्धाम्नो बहिरभ्येत्य गोपुरोपरि विजृम्भितं क्वचिन्नूपुरपरिपाटीपरिमिलितं क्वचित्कण्ठीरवक्रमसौरभपरिमिलित-मत्यद्भुतमाम्नायशिखरपरिष्कारं किमपि ज्योतिरानम्येत्थमुपश्लोक-यामास मोदमानमानसो यतिचक्रवर्ती—

संसारार्णवमग्नानां सुलभोत्तरणेच्छया।
गोपुराग्रं महोदग्रमध्यास्ते नरकेसरी॥ ४४॥

नरत्वमपि सिंहत्वं बिभ्रत् क्षीरसितानयात्।
प्रह्लादावनशीलं मे प्रह्लादं तनुते महः॥ ४५॥

अङ्के हिरण्यकशिपुं दारयन्नखरैः खरैः।
प्रत्ययं जनयत्येष भक्तानामरिभञ्जने॥ ४६॥

अवतारेषु सर्वेषु नारसिंहवपुर्हरिः।
श्रीमानिति हि सिद्धान्तो मुनीनां युज्यतेतमाम्॥ ४७॥

अनन्तरमाश्रितरक्षणत्वरातिरेकविरचितचित्रविग्रहपरिग्रहप-वित्रचरित्रमननसमेधमानमहत्तराश्चर्यसरिदावर्तगर्ताभ्यन्तरात् कथ-मपि चान्द्रमस्याः सरस्यास्तीरमासाद्य पुराणपुरुषमवष्टभ्य निर्भरो वेदान्तसुरभिलमनन्तोदन्तमतिकान्तमुपवर्णयन् सद्भिः समं क्षण-मवातिष्ठत यतिपतिः।

आचम्य जैवातृकवारिजिन्यां
तापत्रयोन्मूलनशीलमम्भः।
चन्द्रावगाहे गलितं तदीयं
सोऽयं सुधौघं मनुते स्म योगी॥ ४८॥

तीरे वसन्तं पुरुषं पुराणं
शाखासहस्राभ्युदितानुभावम्।

सौरभ्यभावं सुमनोऽभिनन्द्यं
स्वाभ्युद्गमायेव तमन्वपश्यत् ॥ ४९ ॥

विशालव्यालोलद्दहुलदलपालीकवलित-
स्वतीरोद्यत्तुङ्गप्रतिफलनसङ्गादिवतराम् ।
विहारे संक्रान्तां मरकतमणिश्यामसुषमां
मुरारातेर्नूनं प्रथयति सुधांशोः कमलिनी ॥ ५० ॥

अटव्यां पद्मानां भ्रमरपटली गायतितमां
जलक्रीडाशैलीं जलरुहदृशो झंकृतिमिषात् ।
मराल्यः खेलन्त्यस्तटभुवि धरासिन्धुसुतयो-
र्गतेरभ्यस्यन्तो विभवमिव मोदं वितनुते ॥ ५१ ॥

विशालरङ्गमेदिनीविलासदर्पणायिता
महीगतेन्दुमण्डलीविडम्बनापटीयसी ।
निजापवादशान्तये निकाममिन्दुनाश्रिता
ततः किमैन्दवीत्यसौ प्रथां बिभर्ति पद्मिनी ॥ ५२ ॥

अमुष्य चन्द्रमःसरोवरस्य तीरमाश्रिता
विशुद्धपक्षशोभिता मनोज्ञगीतिशालिनी ।
शठारिमुख्यसूरिराट्परम्परा मनोहरा
मरालराजराजिवद्विराजते लसद्गतिः ॥ ५३ ॥

अमी तेजोभाजो धृतशुभदशास्नेहभरिताः
स्थिरालोका लोकान्तस्तिमिरदूरीकृतिचणाः ।
क्षमाः क्षेमं कर्तुं प्रकटितजगन्नाथविभवाः
प्रकाशान्ते दीपा इव वकुलभूषप्रभृतयः ॥ ५४ ॥

प्रसन्नो गम्भीरः प्रकृतिमधुरः शीतलतरः
सुवृत्तो निष्पङ्को घनरसतरङ्गैकवसतिः ।
तटाकश्चान्द्रो वा निकटमदसीयं श्रीतवता-
ममीषां भावो वा विहरणपदं रङ्गनृपतेः ॥ ५५ ॥

श्रीमत्केसरभूषणप्रभृतिभिः संकीर्तितं सूरिभि-
र्दिव्यं द्राविडवेदशेखरशतैः श्रीरङ्गभूवैभवम् ।
आकर्ण्येक्षितुमद्भुतं सकुतुकं तैः साकमभ्यागतः
श्रीवैकुण्ठनिकेतनोऽत्र मुदितः शेषाङ्कभाग्दीव्यति ॥ ५६ ॥

श्रीमद्द्राविडवाङ्मयामृतनदीजन्मावनीभृद्वरा
हेमाम्भोरुहमाधवीसुममहारक्तोत्पलोद्भूतयः ।
प्राचीना मुनयश्चिरायुष इमे संचारपूताखिल-
क्ष्माभागा विलसन्ति भक्तिनिधयः श्रीदेहलीशप्रियाः ॥ ५७ ॥

जीयाद्वार्धिपयःपरीतपृथिवीपालोल्लसद्भानुम-
द्दीपारोपणवारितान्धतमसः पद्माक्षमध्यक्षयन् ।
दत्त्वा काञ्चनमालिकामिव वचःपारम्परीं द्रामिडीं
काञ्च्यां काञ्चनवारिजात् समुदितः कासारनामा मुनिः ॥ ५८ ॥

माधव्याः कुसुमादवाप्य जननं मल्लाभिधाने पुरे
तत्सौरभ्यपरम्परामिव वहन् भक्तिं परां माधवीम् ।
भूताख्याभृदभूतपूर्वविभवो विज्ञानदीपप्रदः
कौमोदक्यवतार एष कुरुते कौतूहलं मे मुनिः ॥ ५९ ॥

आविर्भावमिवादिकेशवकृपाप्रेक्षाविशेषाद् गतः
शोणादञ्चितवान् मयूरनगरीवाप्यन्तरक्तोत्पलात् ।
अद्राक्षीत् कमलां कलत्कनकवद्भालं च यश्चक्रिणो
वन्दे नन्दकमीश्वरस्य वचसां तं नन्दकांशं मुनिम् ॥ ६० ॥

अद्राक्षीदरविन्दचक्षुषमधीशानं समस्तात्मनां
चक्षुर्भ्यां चरणोद्भवेन तु भवं मोक्षप्रदानाक्षमम् ।
धिक्चक्रेऽक्षि विकासयन्तमलिके श्रीभक्तिसारं मुनिं
तं भुक्तोज्झितदुर्मतं मम मतत्रातारमीडे सदा ॥ ६१ ॥

अखण्डं भूचक्रं क्वचन नगरं क्वापि निहितं
घटायां वैधात्र्यां पुरमतिगुरुत्वं प्रकटयत् ।

महीसाराभिख्यामभजत मुनिस्तत्र जननात्
कवीनां सारोऽभूत्प्रणमनपरोऽप्यस्य हि तथा ॥ ६२॥

श्रीकान्ताङ्घ्रिजवंशवैभवभराविर्भावकौतूहला-
ज्ज्ञातस्तत्र वहन् प्रपन्नजनताकूटस्थभावश्रियम् ।
दीव्यन्मौक्तिकवत्सुवृत्तविमलः श्रीताम्रपर्ण्यास्तटे
यः कल्पद्रुमवत् समस्तफलदस्तं केसराङ्कं भजे ॥ ६३ ॥

यः श्रीमन्मधुराभिधानकवये सत्संहितां द्रामिडीं
साक्षात्कृत्य जगाद सर्वजनतासाधारणीं पावनीम् ।
आबिभ्राणमिवाकृतिं स्तुतिमतीं श्रीकृष्णतृष्णाभरं
वन्देऽहं शठकोपनामकमृषिं मूर्ध्ना तमेनं सदा ॥ ६४ ॥

श्रीमद्रामकथासुधामनुदिनं सार्धं बुधैरापिबन्
श्रुत्वैकस्य खरादिभिः सह महद्युद्धं रघूणां प्रभोः ।
प्रस्थाय स्वबलेन साकमथ तं दृष्ट्वेति वाचा पुरी-
मानीतः कुलशेखरोऽवतु महराजोऽपि सत्त्वाम्बुधिः ॥ ६५ ॥

मालां येन मुकुन्दमङ्गलगुणग्रामाभिरामां त्रयी-
चूडासौरभदायिनीं मधुरसस्रोतःप्लुतामर्पिताम् ।
तां कान्तां हृदयंगमां तनुभृतः संबिभ्रतो भक्तितो
भ्राजन्ते कुलशेखरः स जयतु श्रीरङ्गयालोद्यतः ॥ ६६ ॥

कस्तूरीमिव शेषवृत्तिसुदृशः पाण्योः किणश्यामिकां
बिभ्रन्नन्दनकल्पनन्दवनिकां कुर्वन् खनित्रादिभृत् ।
विद्याशुल्कमवाप्य पाण्ड्यसदसि प्राज्ञैश्च राज्ञाञ्चितो
रङ्गेन्द्रश्वशुरो द्विजान्वयमणिः श्रीविष्णुचित्तोऽवतात् ॥ ६७ ॥

आविर्भूय महीतले द्विजपतिः श्रीविष्णुचित्तो महान्
वाचाटोद्भटदुर्घटद्विजघटापक्षानयं पाटयन् ।
पक्षं स्वं प्रथयन् मदावलगतो मल्लद्विषं वर्धय-
न्नाशीर्भिः प्रणयप्रमुग्धधिषणः सूर्यग्रणीर्वर्धताम् ॥ ६८ ॥

12

श्रीरङ्गक्षितिसार्वभौमचरणाम्भोजातपुष्पंधय-
स्तद्भूषायितसूक्तिमौक्तिकमणीमालार्पणप्रौढिमान् ।
सूरीन्द्रैर्दशभिस्तु तत्त्वममलं तं प्रापयन्वैभवं
शेषाद्रीश्वरदुर्लभं विजयतां भक्ताङ्घ्रिरेणुर्मुनिः ॥ ६९ ॥

आरामागमकौतुकी विरचयन् पञ्चायुधीमञ्जनाद्
द्वेधासौ सदसन्मतप्रवणतारीतीः समुद्भावयन् ।
श्रीरङ्गेन्द्रसुवर्णपालहरणादात्मापहारैनसा
मुक्तश्चिलचरितवान्विजयते भक्ताङ्घ्रिरेणुर्मुनिः ॥ ७० ॥

श्रीमद्रासपुरोपकण्ठविलसत्केदारभूसंभवं
श्रीवत्सांशतयातिनीलवपुषं योगीश्वरस्कन्धतः ।
नीतं तत्क्षणमेव रङ्गरमणेनैक्यं गतं तं मुदा
गाथाभिर्दशभिः स्तुवन्तममलं पश्यन्तमीडेऽनिशम् ॥ ७१ ॥

अञ्चन्पञ्चमवर्णमञ्चिततरं कुर्वन् स्वरं पञ्चमं
कांचिद्वाचमुदञ्चयन् मधुमुचं प्राग्वाक्प्रपञ्चाधिकाम् ।
आचूडाङ्घ्रि दृशोः पदं विरचयन् रङ्गे भुजङ्गेशयं
वीणावानुपवीणयन् विजयतां पाणाभिधानो मुनिः ॥ ७२ ॥

चिञ्चा स्वापमहो विमुञ्चति मही शेषस्फटावध्यपो
नाद्यापि प्रकटीकरोति वकुलो धत्ते शलादून्न हि ।
चर्चा किञ्चन नैव शाम्यति पुरे श्रीकृष्णकुट्याह्वये
यश्चापेन सुवर्णवुद्धहरणो जीयात्स पाटचरः ॥ ७३ ॥

दिव्यानेकविधस्थलस्थभगवन्मूर्तिप्रथोद्भावन-
प्रौढो द्राविडवाङ्मयाशुगशतैर्जित्वा परं वादिनः ।
मञ्जीरं विरुदं पदे करतले खड्गं सखेटं दध-
द्वाग्घाटीं परकाल एष घटयेद्वादाभटीशालिनीम् ॥ ७४ ॥

इत्थं चन्द्रसरस्तीरपरिष्कारसूरिवरपरिषत्परिनमस्क्रियासत्क्रियां क्रियासमभिहारेण कृत्वा भगवन्तं छन्दोमयं वैनतेयं सविनयं नत्वेत्थमस्तावीत्—

धिक्कुर्वाणं स्वपक्षप्रवचनकलया लूनपक्षान् विपक्षान्
व्याकुर्वाणं स्वमूर्ध्ना सकलशुभगुणालंकृतं कैटभारिम् ।
व्यक्ताङ्गं वेदसारं परमिव पतगाध्यक्षमध्यक्षयामि
प्राचार्यो मे यदात्मा जगदखिलमिदं तातवानित्यघोषीत् ॥ ७५ ॥

लक्ष्मीकान्तत्रिलोकीपरिवृढविभवव्याक्रियाचक्रवर्ती
भूषाभोगीन्द्रचूडामणिकिरणगणव्यक्तदिक्चक्रवालः ।
कुप्यज्जम्भारिमुक्तोद्भटकुलिशशिखाकुण्ठनोद्दण्डपक्ष-
द्वन्द्वः कल्याणराशिं कलयतु विनताशुक्तिमुक्तामणिर्नः ॥ ७६ ॥

आम्नायमूर्तिभावादमृतकरत्वप्रशस्तिशालित्वात् ।
प्रबलतरपक्षवत्त्वाद् द्विजराजत्वं त्रिधास्य बाभाति ॥ ७७ ॥

इत्यभिष्टूय संहृष्टः प्रविष्टो रङ्गमन्दिरम् ।
इन्दिराभरणं द्रष्टुमुत्कण्ठितमतिर्यतिः ॥ ७८ ॥

विशिष्टाद्वैतसिद्धान्तराजधानीजयध्वजः ।
श्रीरामानुजयोगीन्द्रो गरुडध्वजमभ्ययात् ॥ ७९ ॥

अहिभ्यो भेतव्यं न खलु विषयेभ्यस्तनुभृता-
मिति प्रेम्णा रङ्गक्षितितलनरेन्द्रेण महता ।
निबद्धं स्तम्भाग्रे गरुडमदसीयाकृतिजितं
यथा मेरुं नम्रं कनकबलिपीठं प्रणतवान् ॥ ८० ॥

रघूत्तंसात् प्राप्तं रजनिचरनाथानुजनुषा
समानीतं सह्यक्षितिधरसुतासैकतगतम् ।
चतुःसङ्ख्यैर्वेदैः कलितमकुटं हाटकमय-
प्रतीकं श्रीरङ्गक्षितिपतिसदावासमहितम् ॥ ८१ ॥

चिरत्नं नूत्नाभं प्रणवतनु रङ्गाभिधमसौ
विमानं प्राचीनं वचनमिव शेषिप्रकटनम् ।

मुहुर्दर्शंदर्शं प्रणमनपरो मोदभरित-
स्ततो विष्वक्सेनं समभजन रामानुजगुरुः ॥ ८२ ॥

चिराद्गाढोदूढाखिलभुवनभारापनयनं
विधायाप्तुं सौख्यं नियतमधुना सैन्यरमणः ।
अपश्यत् साकूतं निजकरलसद्वेत्रशिखरात्
त्रिदण्डाग्रं नेतुं त्रिजगदधिराजश्रियमिव ॥ ८३ ॥

विमानाग्रे तिष्ठन् परमपुरुषो हाटकवपुः
समागच्छत्सेवारसिकजनवीक्षोत्सुक इव ।
विवृण्वन् वात्सल्यं किमपि घनवर्षातपसहः
सहासं संदृष्टो यतिकुलधुरीणेन गुरुणा ॥ ८४ ॥

अनारूढः पत्रं परिहृतपदत्रं सरभसं
स्वयं प्रत्युद्गम्य प्रमदभरितः स्मेरवदनः ।
पुरस्कारं कृत्वा प्रणयशिशिरालोकसुधया
मुहुः सिञ्चन्नन्तर्भवलमनयल्लक्ष्मणमुनिम् ॥ ८५ ॥

दिशन् पाद्यं पाथः परिमलमयं शीतलतरं
शिरः शेषपत्र्या घटितमिव पट्टेन कलयन् ।
उभाभ्यां जायाभ्यामुभयतटभाग्भ्यामुचितया
गिरा प्रोक्तो व्यक्तां विदधदुभयाम्नायगुरुताम् ॥ ८६ ॥

अरातिभ्यो भीतिं त्यज भज च मत्पक्षपदवी-
मितीवाचक्षाणः स्वयमभयहस्तप्रतिकृतिम् ।
करे कुर्वन्नङ्घ्र्योर्निवसति शठारेरिति कथां
स्फुटीकर्तुं पूर्वां शिरसि शठकोपं च घटयन् ॥ ८७ ॥

विभूतिद्वन्द्वं ते व्यतरमखिलेभ्योऽपि भवतः
श्रितेभ्यस्त्वं सेनापतिरिव गृहं पालय मम ।
गिरेत्थं व्याहृत्य प्रणयरसधारामधुरया
पिबन् दृग्भ्यां रङ्गी बहुमतिमतानीद्यतिपतेः । ॥ ८८ ॥

गलद्बाष्पारोहत्पुलकमुकुलोद्गद्गदगलः
स्तुवन् हृद्यैः पद्यैः श्रुतिसहचरैर्यामुनमुनेः ।
तृषार्ताभ्यां दृग्भ्याममृतमिव संतापशमनं
परं ज्योतिः किंचित् फणिशयनमासाद्य मुमुदे ॥ ८९ ॥

तदनन्तरं श्रीरङ्गक्षमामृगेक्षणावक्षोजतटालङ्काराभ्यन्तरविराजमानसरसमुक्ताफलपटलनिरन्तरालघटितपृथुलविपुलवर्तुलपदकमण्डललक्ष्मीस्फुरणपटिमानमाटीकमानम्, अन्तर्मिलन्मिलिन्दवृन्दसुन्दरडिण्डीरपाण्डरपुण्डरीकप्रकाण्डवरवलयाडम्बरविडम्बनापाण्डितीमाहिण्डमानं, नीहारकरकिरणधोरणीवलननिर्निद्रनीरन्ध्रकुमुदसमुदायान्तरसमुदयमानेन्दीवरप्रवरसंदोहसंदेहसंधानप्रौढिमाढौकमानम्, अभ्युत्थिताञ्जनगिरिमञ्जुलान्तरीपपारावारपरीवाहापवर्तचक्रचमत्काररचनाचातुरीं भजमानम्, अभिनवाम्भोभारगम्भीरमुदिरनिकरभासुरतुषारभूधरमहत्तरशिखरवैखरीमाबिभ्राणं, कस्तूरिकापङ्ककमनीयकलङ्कालंकृतशशाङ्कमण्डलशङ्काकलनकौशलीमाश्रयमाणं, करिकलभोपशोभितस्फाटिकाचलशिलाफलकशैलीमाविष्कुर्वाणं, श्रीरङ्गविमानगर्भमभितः स्वप्रभया परिष्कुर्वाणम्, अनेकधा किंकुर्वाणं, स्वकिंकरीकृताखिलगीर्वाणं, स्वोपरि परिभ्राजमानमुकुन्दम्, अङ्गप्रदिमधवलिमगरिमपरिहसितविकसितकुन्दं, विडम्बितपुञ्जीभूतशारदकन्दं, स्वावतारमूलकन्दम्, अन्यूनगुणवृन्दसान्द्रं फणीद्रं चिरमनुभूय तदुपरि परिस्फुरन्तमनन्तं, जगदाक्रमणश्रमभरादिव निजमेव दक्षिणभुजं भुजंगमपुंगववैभवभाजं भुवनाभयदानव्रतनिराकुलीकृताखण्डलादिनिखिलक्रतुभुजं त्रैलोक्यसाम्राज्यभुजं सरयमुपधानतया निधाय जगद्रक्षणजागरणानुगुणमुद्रां कामपि निद्रामनुभवन्तं, निजचरणारविन्दसंवाहनप्रवणयोर्लक्ष्मीक्षमयोराजानुप्रसारिणा देदीप्यमानमणिकेयूरकङ्कणाङ्गुलीयकश्रीमनोहारिणा कुसुमितकल्पद्रुमविटपानुकारिणा सव्येन बाहुना संवहनीयप्रदेशविशेषमिव प्रदर्शयन्तं, किरीटतटघटितकुरुविन्दकन्दलवृन्दपादारविन्दमहःसंदोहसंदानितसदातनसन्ध्यारागबन्धुरपाशायुधपाकशासनदिशावकाशं, लक्ष्मीचरणलाक्षारसलाञ्छनललितबाहान्तराल-

परिहसितबालातपजालाधृतगगनाङ्कणप्रकाशं, पुरःस्थितस्वमूर्तिभेद-वरोपयन्तृवराङ्गसौन्दर्यपूर्तिसमालोकनसुखपारवश्यादिव शयानं, निजलावण्यकणिकया कन्दर्पकोटिमतिशयानं, राकेन्दुबिम्बरमणीय-वदनमण्डलं, श्रवणान्दोलितमहार्घमणिकुण्डलं, विनिद्रेन्दीवरदल-श्यामलिमकोमलाङ्गसुषमाप्राग्भारपरिचुम्बितया विडम्बिताम्बरमणि-बिम्बनिस्तुलकौस्तुभमणिशोभाकदम्बकरम्बितया कम्बुबन्धुरकन्धर-विलम्बितया विहसितोडुपाल्या विरचितत्रिवेणीकेल्या मुक्तावल्या विभूषितं, हिमसारमौक्तिकमरतकपद्मरागपुष्यरागविद्रुमगोमेधवैडूर्य-रत्नखचितदिव्यावयवसमुचितविचित्राभरणसहस्रप्रसाधिततया श-क्रोपलशकलश्यामलाङ्गतया च रत्नाकरताराविकुरम्बकरम्बिताम्ब-राडम्बरविडम्बप्रागल्भ्यमवलम्बमानम्, अलकावलिशैवाललताविता-नविराजमाननयनशफरभासुरवदनकरचरणकमलविलसितत्रिवलीत-रङ्गललितबाहाकूलोपशोभितोरुतरोरुकाण्डलवदण्डभासमानकवाट-विस्तीर्णवक्षःस्थलीरोमावलीसरणिनिराघाटसंचारचक्षुसौन्दर्यामृतपूर-पूर्णलावण्यसरिदावर्तसनाभिनाभिप्ररूढवाणीपरिवृढसंभवनिदानपु-ण्डरीकप्रकटितदेवतासार्वभौमभावं, निगमान्तशतोद्घुष्यमाणनि-रुपमप्रभावं, कटितटीघटितहाटकपटीलटिल्लताघटनाप्रकटीकृतघनाघ-नाटोपभरचारुतरवपुषम्, आश्रिताशेषाभिलषितपुषम्, अनवधिक-प्रेमजुषम्, आत्मनिःश्वसितायितऋक्सामयजुषं, भक्तलोकविलो-चनचकोरशीतत्विषं, क्षुरद्विषं सभक्त्युन्मेषमापादचूडमनिमेषमनु-भूयानन्दसागरान्तर्निमग्नसर्वाङ्गोऽस्तमितान्यव्यापारान्तरङ्गः सानन्द-बाष्पतरङ्गो विनयोत्तुङ्गः क्षणं स्तब्ध इवावर्तिष्ट । अभितुष्टाव च—

यमाहुर्दुर्दर्शं स्थिरवचनचूडामणिगणा
यमन्तर्गाहन्ते विमलमतयः केऽपि यतयः ।
तमद्राक्षं साक्षात्परमपुरुषं मङ्गलपुषं
भुजंगस्योत्सङ्गे भुवनभयभङ्गाय शयितम् ॥ ९० ॥

नमच्चेतोजन्मप्रतिभटजटाजूटतटिनी-
परीवाहस्फायत्कुमुदपटलीविभ्रमकरीम् ।

नखज्योत्स्नागङ्गां निखिलजनसंतापशमनीं
विगाहे धन्योऽहं विबुधमहितां कैटभभिदः ॥ ९१ ॥

पदाम्भोजद्वन्द्वं फणिपरिवृढोत्सङ्गवसते-
र्मुरारेरद्वन्द्वं मुनिजनमनोभृङ्गमहितम् ।
श्रुतिश्रेणीचूडाभरणमणिकोटीरसुषमां
दधानं मद्दृष्ट्योर्भजति विषयीभावमधुना ॥ ९२ ॥

श्रियं वक्षःपीठे तटितमिव बिभ्रज्जलधर-
स्तदाश्लेषाल्लग्नं मृगमदमिवाङ्कं प्रकटयन् ।
दधानस्तत्केलीमुकुरमिव दिव्यं मणिवरं
मुरारातिर्धत्ते मुदमनवधिं शेषशयनः ॥ ९३ ॥

जगत्कान्तिभ्रान्त्या स्वभुजमुपधायाधिभुजगं
शयानो रङ्गेशो भुजमपरमाजानु कलयन् ।
रमाभूम्योः पादाम्बुजयुगलसंवाहनविधौ
प्रदेशं व्याकुर्वन्निव कनति रङ्गक्षितिपतिः ॥ ९४ ॥

द्विषद्भ्यः संभाव्यं भुवनभयभारं दलयितुं
भुजादण्डं कालायसपरिघचण्डं प्रकटयन् ।
अधस्तान्नाथोऽयं समुपघटयन् दक्षिणभुजं
न जीर्येद्गर्भस्थं भुवनमिति निद्राति गतभीः ॥ ९५ ॥

वितीर्णस्त्वं लक्ष्मीरमण रघुरामेण कृपया
समानीतो लङ्कापरिवृढसगर्भ्येण झटिति ।
गुणोत्तुङ्गं रङ्गं प्रणतजनरक्षोचितमिति
स्थिरं वासस्थानं समधिगतवान् वेद्मि हृदयम् ॥ ९६ ॥

रङ्गं त्वया राजति कैटभारे
रङ्गेण च त्वं नितरां विभासि ।
अन्योन्यसङ्गो रमणीय एष
सुवर्णमाणिक्यनयेन भाति ॥ ९७ ॥

अनन्तरमभ्यागच्छदाश्रितावनाभिमुख्यप्रणतरक्षणविलम्बाक्षमतया उभयपार्श्वनिषण्णरमाक्ष्माप्रेरणपरतन्त्रतया च ससंभ्रमं स्वय-

मेव पञ्चायुधीं धारयन्तं सिंहासनादुत्तिष्ठन्तमिव भान्तं भगवन्तं सकलजगन्नियन्तारं सौम्योपयन्तारमित्थमुपश्लोकयामास--

करेणुभ्यां दन्तावलवर इवोर्वीधरतटे
मरालः कान्ताभ्यामिव विकचपाथोजसरसि ।
वराभ्यां ताराभ्यामिव वियति राकाहिमकरो
रथाङ्गिन् श्रीरङ्गे सह सहचरीभ्यां विहरसे ॥ ९८ ॥

अभिव्यक्तिस्थानं भुवि विदितमष्टोत्तरशतं
श्रितानां देवानां गणयति गुणनात्मपितरि ।
विहायान्यान् गोदा भवति निदधे कौतुकभरं
ततस्त्वं रङ्गक्ष्मारमण गुणभाजां गुरुरसि ॥ ९९ ॥

भूमा कश्चन चोलभूमिकमितुर्भूयान् जरीजृम्भते
यस्त्वं नामसहस्रवानपि जगन्नाथोऽपि रङ्गप्रभो ।
तत्पुत्रीं परिणीय वासनगरीसीमन्तमुक्तामणिं
जामातेत्यभिधीयसे खलु जनैः सर्वैर्जगन्मोहनः ॥ १०० ॥

कुन्ती खेटी कृपाणी मणिमयकवची मौक्तिकोष्णीषधारी
धाटीसङ्गी निषङ्गी मुरमथनविभो भासि रङ्गी तुरङ्गी ।
डिल्लीनाथस्य कन्या यवनकुलसुधासिन्धुसंतानवल्ली
त्वामुद्यत्कीर्तिमल्लीसमुचितमभजद्वल्लभं स्त्रीमतल्ली ॥ १०१ ॥

आढ्यस्त्वं मङ्गलगुणान् मणीन् रङ्गापणे विभो ।
विक्रीणन् भक्तिमूल्यानि भूरि गृह्णन् विजृम्भसे ॥ १०२ ॥

अनन्तरमरविन्दादिव मकरन्दनिर्भरादद्वन्द्वादरविन्दाक्षचरणद्वन्द्वात् कथंचन चक्षुषी विकस्वरपुण्डरीकत्विषी समाकृष्याभ्यर्णभाजं देशिकसम्राजमनुग्रहपरिपूर्णं महापूर्णं सविनयमालोकयन्नित्थं श्लाघयामास--

महापूर्ण श्रीमंस्तव चरणराजीवभजन-
प्रभावाज्जातोऽहं बहुमतिपदं रङ्गनृपतेः ।
जगद्घोषः सत्यः सकलमपि भोगं नरपते-
रनायासाद्बालो लभत इति सेवां कलयतः ॥ १०३ ॥

एवं वदन्तं विनयाभिरामं
न्यायोदधिं तं यतिसार्वभौमम् ।
सिञ्चन् कटाक्षैः करुणारसार्द्रै-
रित्थं बभाषे घनपूर्णसूरिः ॥ १०४ ॥

श्रीमन् वैष्णवसंपदं बहुलयन् पापौघमुत्पाटयन्
दुर्वारोहणदुर्गमां विरचयन् याम्यां पुरीं सर्वतः ।
कुर्वन्नस्तबलिं कलिं क्षितितले कश्चित् समुत्पत्स्यते
विद्यावानिति केसराङ्कफणितिस्त्वय्येव विश्राम्यति ॥ १०५ ॥

अथाध्यक्षं रङ्गक्षितिबलभिदो मण्डपवरे
निषण्णः सद्बृन्दैर्बहुलमनुनीतः करुणया ।
परीचारस्थानेष्वथ परिजनान् धूतवृजिनान्
व्यवस्थाप्य स्थाता सकलविधकैंकर्यसरणौ ॥ १०६ ॥

विमानगोपुरादीनि शोधयन् द्रढयन् पुनः ।
श्रीग्रामान् विमृशन् वेदग्रामांश्च सह सज्जनैः ॥ १०७ ॥

अधिष्ठाय मठं कंचिदधिष्ठाता विपश्चिताम् ।
बभौ रङ्गं च ककुभः प्रतिष्ठाभ्यां प्रसाधयन् ॥ १०८ ॥

श्रीरङ्गभूमीरमणविजयध्वजवैखरीम् ।
त्रिदण्डमण्डितकरो बभार यतिभूपतिः ॥ १०९ ॥

श्रीयामुनाचार्यशुभोक्तिवृन्दं
श्रीभाष्यमुख्याम्बुजमूलकन्दम् ।
रामानुजाख्ये निदधे तटाके
पूर्णः शिरो भूषयितुं श्रुतीनाम् ॥ ११० ॥

श्रीरङ्गविज्ञप्तिकराननाब्जा-
द्योगीन्द्रवक्त्राम्बुरुहं प्रपन्ना ।
दिव्यप्रबन्धावलिराजहंसी
चित्रान् विहारान् रचयांबभूव ॥ १११ ॥

गभस्तिमालीव गवां सहस्रं
गिरां सहस्रं शठकोपसूरेः ।

मुखैः सहस्रेण स शेषभोगी
बभार योगी विवरीतुकामः ॥ ११२ ॥

अष्टादशावृत्ति विधाय याता-
मष्टादशद्वीपविसारिकीर्तिः ।
गीतान्तिमार्थं समवेत्य गोष्ठी-
पूर्णाद्रहो गोपुरभाग् जगौ तम् ॥ ११३ ॥

कूरेशस्य पवित्रकीर्तिवसतेरेकस्य वाच्यं रहो
नान्यस्येत्यभिशापपूर्वकमहो गूढं मयोदीरितम् ।
त्वं शृङ्गाटकगोचरं व्यरचयः का ते गतिः कथ्यता-
मित्याक्षेपगिरा गुरुर्यतिपतिं बोद्धुं मनोऽभर्त्सयत् ॥ ११४ ॥

आचार्यवाक्यमतिलङ्घ्य किलाहमेको
यास्याम्यधोगतिमशेषशरीरभाजः ।
यास्यन्ति मोक्षमिति लक्ष्मणयोगिवाणी-
माकर्ण्य देशिकमणिर्मुमुदे निकामम् ॥ ११५ ॥

अहो गीतारत्नं विजयरथसारथ्यसमये
हठाद्भ्रष्टं लीनं क्वचन गहने भारतवने ।
स्वयं नाथो लब्ध्वा स्वकुलजनुषां भूषणमदा-
दिदं गोष्ठीपूर्णादलभत स रामानुजयतिः ॥ ११६ ॥

श्रीमद्भागवताभिमानपदवीपान्थीभवेच्चेन्नरो
बाढं सोऽयमकुण्ठमेव भजते वैकुण्ठघण्टापथम् ।
सर्वस्वं चरमार्थमित्थमदिशाद्विज्ञसिकृत्पुंगवः
वाङ्गार्हं दिशतो यतिक्षितिभृतो हारिद्रलेपं मुदा ॥ ११७ ॥

रामानुजः शठनिषूदनयोगिदृष्ट-
श्रीद्रामिडश्रुतिकिरीटगभीरभावम् ।
सांदीपनेरिव हरिर्जगृहेऽथ गोष्ठी-
पूर्णैरितो झटिति माल्यधरादुदारात् ॥ ११८ ॥

विशिष्टाद्वैतसिद्धान्तपद्धतिस्थापनक्षमः ।
परपक्षप्रतिक्षेपदक्षोऽभूल्लक्ष्मणो मुनिः ॥ ११९ ॥

तदनु कदाचन,

श्रीमद्यामुनदेशिकेन्द्रचरणाम्भोजातमाध्वीलिहा-
मार्याणां निवहैः सह प्रियसखैः श्रीकूरनाथादिभिः।
आ गाङ्गेयतरङ्गिणीविभजनादारामपारम्परी-
मृद्धामीक्षितुमद्भुतां यतिपतिः प्रागात्कदाचिन्मुदा ॥ १२० ॥

विशाला शालेयं विलसति तटे हेमसरित-
स्तरङ्गाणां सङ्गाद्वलति पवनः पावन इव।
परीवाहः पार्श्वे परिवहति लोलच्छफरिका-
गणस्निग्धच्छायास्थगिततरणिर्भाति सरणिः ॥ १२१ ॥

चिञ्चावृक्षपरम्परा दिविषदां स्नानोत्सुकानामिव
स्फारा स्यन्दनपालिका मरतकग्रामाभिरामाकृतिः।
प्रान्ते चामरधारिणीवरमणिश्रेणीमनोहारिणी
पक्वाग्रैः कलमैः सुधांशुसुषमैः केदारभूसन्ततिः ॥ १२२ ॥

तीर्थेष्वभ्यधिकत्ववैभवमियं हेमापगा बिभ्रती
स्वच्छैः कच्छसकाशकाशकुसुमैश्चन्द्रप्रकाशोज्ज्वलैः।
चञ्चच्चामरसंचयैरिव शुभैः संवीज्यमानानिशं
डिण्डीरस्मितमण्डिता जलनिधिं साडम्बरं गच्छति ॥ १२३ ॥

आकीर्णामपि कण्टकैः खरतरैरावेष्टितामप्यहि-
श्रेणीभिर्मधुपोऽनुमाय सुमितां सौरभ्यतो निर्भयः।
गुञ्जन्नञ्चति केतकीं सरभसं धूर्तो यथा मन्दिरे
गुप्तां भूपतिसुन्दरीं भटगणैर्निर्भीकमाक्रामति ॥ १२४ ॥

भ्रान्तेक्षुदण्डा बहवस्तटोद्य-
द्वारुत्मताश्मद्युतिपुञ्जकल्पैः।
चित्रैः स्वपत्रैः करपत्रमित्रैः
स्नातात्मपापानिव दारयन्ति ॥ १२५ ॥

श्रीरङ्गभूवल्लभवन्दनार्थ-
मभ्यागतानां सुरपुंगवानाम्।
संमर्ददूरीकरणोचितानि
चित्राणि वेलाणि परिस्फुरन्ति ॥ १२६ ॥

उच्चैर्गुच्छकदम्बकैः पृथुतरैर्मुक्ताफलैर्गुम्भितै-
राचूडाङ्घ्रि विभूषिता इव हरिं द्रष्टुं समभ्यागताः।
क्रीडाक्रीडमुपाश्रिताः श्रमशमं कर्तुं निषण्णाः स्थली-
ष्वेते भान्ति मधूकभूरुहवराः पाण्ड्यक्षितीन्द्रा इव ॥ १२७ ॥

अम्भोवाहघटीविमुक्तपयसा सिक्तातपैः शोषिता
धूता वाततरङ्गसङ्गवशतः शाखाशिखालम्बिनी।
जम्बूपक्वफलप्रकाण्डपटली भृङ्गावलीवैखरीं
बिभ्राणा मधुसूदनस्य सुषमां प्राप्तुं विधत्ते तपः ॥ १२८ ॥

आम्रास्ताम्रतरैः फलैः परिणतैर्माधुर्यवद्भिर्घनैः
शाखाबाहुसमुज्ज्वलैः किसलयैर्हस्तैः समुज्जृम्भितैः।
किं तेनामृतकौतुकेन पिबतैतानि स्वदन्तेतरा-
मित्यामन्त्रणमाचरन्ति पतगोद्घोषच्छलाद् द्योसदाम् ॥ १२९ ॥

आरामापणवाटिकासु घटितान् दाडिम्यमुख्यैर्द्रुमै-
राढ्यैः काञ्चनसत्फलाख्यसरणीरुद्घाट्य संदर्शितान्।
बीजव्याजमणीनहो निजवचोमूल्यैः परिक्रीणते
सद्यस्तान् हृदयंगमान् विदधते कान्ता द्विजाः केचन ॥ १३० ॥

विभान्तो मूलार्धप्रकटितनिजस्कन्धघटितैः
फलैः स्थूलैः कुम्भैरमृतभरितैर्भोगिपतिना।
नियुक्ता भित्त्वोर्वीं बहिरिव नमन्तः सरभसं
भजन्ते वोढारः पनसकपटा रङ्गनृपतिम् ॥ १३१ ॥

वनस्थलीवारिजलोचनानां
करद्वयीकण्ठविभूषणाय।
मणिप्रवालानिव दर्शयन्ति
फलापदेशाद्बदरीमहीजाः ॥ १३२ ॥

द्विगुणसौरभनिर्भरमद्भुतं
मुनिगिरा कुसुमस्तवकैरपि।
बदरिकाश्रमतो बदरीवनं
नियतमञ्चति रङ्गपुरस्थितिम् ॥ १३३ ॥

कुन्दो मुकुन्दपदपङ्कजसङ्गधन्य-
स्तद्वासनां परिमलैः प्रकटीकरोति।
तत्पूजनाय सुमनोजनमुद्वहन् किं
सज्जीभवत्यभिरुचिं न जहच्चिराय ॥ १३४ ॥

उन्नम्राः क्रमुका नभोवलभिकास्तम्भायमाना निजैः
शोणैः पक्वफलैः सुपर्वसुदृशां संमोदमातन्वते।
ताम्बूलीलतिकाश्च पत्रपटलीमुद्घाटयन्त्यञ्जसा
चूर्णं तूर्णमिवार्पयन्ति कुसुमस्तोमालगस्त्यद्रुमाः ॥ १३५ ॥

वितानानां लक्ष्मीं मरकतमणिश्यामलपटी-
निबद्धानामेते परिदधति कङ्केलितरवः।
समन्तादानद्धा विजितकुरुविन्दद्युतिभरा
गुलुच्छा लम्बन्ते परिकलितपट्टाम्बरधियः ॥ १३६ ॥

अवष्टभ्य च्छायां वसति भुवनं यस्य भुजयोः
स एवायं रङ्गक्षितिवलभिदस्तत्कुलभुवः।
निषेव्यास्ते छायां हिमकरसरस्तीरजनुष-
स्ततस्तुङ्गाभिख्यां दधति किमु पुंनागतरवः ॥ १३७ ॥

विराजन्ते वाप्यो विमलसलिलाः सौरभभृतो
बृहद्भाण्डागारा वलभिरिव सान्द्रद्रुमततिः।
विशाला पत्राली व्यजनपरिपाटीं कलयते
प्रसूनालिर्धिष्ण्यं भवति जनशाला घनवनी ॥ १३८ ॥

आरामाः परिपक्वजम्भलफलान्याबिभ्रतो रङ्गभू-
नेत्रे हाटककन्दुकप्रतिभटान्येतानि दत्त्वा पुनः।
लब्धुं कामपि वृद्धिमद्भुतममी संनाहमातन्वते
तृष्णा शान्तिमुपैति नैव महती संपत्तिभाजामपि ॥ १३९ ॥

रम्भास्तम्भकदम्बकं फलभरैर्नम्राङ्गमालक्ष्यते
लज्जाभारनताननं जलधिजाकान्तोरुकान्त्या जितम्।
साहंकारममी तदङ्कुरगणाः संजृम्भमाणा विभो-
र्जङ्घाकाहलिकाविडम्बनचणास्तन्वन्ति तोषं दृशोः ॥ १४० ॥

आरामेषु महत्तरेषु तिमिरप्राग्भार आस्ते दिवा
गूढो रात्रिषु रङ्गभूमिपवपुःश्रीचौर्यसंरम्भवान्।
आविष्कृत्य फणाभृतो निजफणामाणिक्यदीपावली-
मेतद्भङ्गकृतश्चरन्ति नियतं शेषाहिसंप्रेषिताः॥ १४१ ॥

गम्भीराः शिशिरा विगाहसुलभा हेमापगासंभवाः
सारण्यो विविधा वनेद्रुगतयः पाठीनकूर्माश्रिताः।
राजन्ते धुरि रामकृष्णनृहरिक्रोडाद्यवसंभाविताः
कारुण्यस्य दशावतारसुभगाः पूरा इव श्रीपतेः॥ १४२ ॥

तीरस्थानां द्रुमाणां विभवमनुपमं वीक्ष्य लज्जातुराणां
स्वर्धाम्नामीश्वरेण त्रिदशविटपिनां कर्तुकामेन वृद्धिम्।
आज्ञप्ताः केऽपि भृत्या इव पृथुलफलव्याजगाङ्गेयकुम्भै-
रम्भो हेमापगायां दिवमभिचलिता नालिकेरा विभान्ति॥ १४३ ॥

गुञ्जागुच्छमिलन्मिलिन्दपटलीधूमावलीवैखरीं
धत्ते यः परिपक्वतत्फलचयो दत्ते कृशानोर्धियम्।
पाकायैनमवेक्ष्य पान्थजनता हर्तुं यतेतापि वा
भ्रान्त्या भ्रान्तिरियं मृषोद्यमतवत् काचिज्जरीजृम्भते॥ १४४ ॥

अम्भःपूरविजृम्भणस्य समये हेमापगाया महा-
कल्लोलावलिवेगतः सुघटितैरद्यापि लग्नैरिव।
स्थूलैर्निस्तुलनिस्तलैः सुविमलैः शाखाञ्चलस्थैः फलै-
र्धात्रीवृक्षपरम्परातिललिता धात्रीविभूषायते॥ १४५ ॥

किसलयदलहस्ताः पुष्पमालाभिरामा
मधुकररवगीता वातपोतावधूताः।
अनुदधति च वल्ल्यो मल्लिकाद्या मतल्ल्यो
नटनपटुवधूटीपङ्क्तिनाट्यप्रशस्तिम्॥ १४६ ॥

आमूलाग्रविजृम्भमाणकुसुमस्तोमाभिरामा इमे
कूटा हाटकभूमिभृत्कटकतः प्राप्ता इवाराद्वनम्।
भासन्ते सुरभीकृताखिलदिशश्चाम्पेयभूमीरुहो
नैतानञ्चति चञ्चरीकपरिषद्धात्रा वृथा वञ्चिता॥ १४७ ॥

श्रीमद्द्राविडवेदमौलिवचसामामोदसंपादिका
दातुं केसरभूषणत्वविभवं शक्ताः शठद्वेषिणः ।
तत्प्रेम्णा हरिणापि मूर्ध्नि विधृता यत्पुष्पक्लृप्तस्रज-
स्तेऽमी केसरभूरुहो विदधते कौतूहलं मे दृशोः ॥ १४८ ॥

छायापादपमूलभूमिषु समाबध्य स्विका मण्डली-
र्गायन्त्यो धुरि रङ्गनायकयशो विस्तारयन्त्यः फणाः ।
सश्लाघं भुजगाङ्गना निजशिरःकम्पैः समीराङ्कुर-
स्रंसद्भिः कुसुमैः पुरस्कृतिमहो विन्दन्त्यमी शाखिभिः ॥ १४९ ॥

आशा वंशकरीरकान्तिलहरीश्यामा वितन्वन्त्यमी
व्योमाभोगविलम्बनोच्छ्रयदृढस्तम्भा इमे वेणवः ।
दृश्यन्तेऽपि च कीचकाः स्वविवरैरापूरितैर्वायुना
गायन्त्यो वनवैभवं परिसरे संगीतशीला इव ॥ १५० ॥

वन्या नित्यवसन्तविभ्रमकरी धन्येयमन्यादृशी
देवोद्यानवरेण योद्धुमनिशं चोद्यानमातन्वती ।
उद्यानाह्वयमाबिभर्ति तदिदं शक्त्यैव सम्भण्यते
लक्ष्यं लक्षणयैव नान्तरमिमि प्रज्ञा समुन्मीलति ॥ १५१ ॥

रिङ्खन् हेमतरङ्गिणीलहरिकावीथीषु मन्दं स्खलन्
कुञ्जान्तेषु चरन् लतावितितिभिः सामोदमालिङ्गितः ।
दीव्यत्केसरमञ्जरीपरिगलद्धूलीच्छटाधूसरो
मुक्ताः पुष्पततीः किरन् विहरते चित्रं समीरार्भकः ॥ १५२ ॥

अखण्डानन्दैकप्रकृतिपरमब्रह्मभजन-
प्रमोदप्राग्भाराम्बुधिलहरिरेखासहचरी ।
अखण्डा कावेरी जनघनतमःखण्डनकरी
द्विधा भूता रङ्गावनियुवतिमुक्तावलिरिव ॥ १५३ ॥

इत्थं बहुधा वर्णयन्नखण्डस्वर्णनदीं स्वर्नदीमिव भुवं गतामवजगाहे योगिनां चक्रवर्ती ।

अखण्डां स्वर्णाख्यां सरितमवगाह्यामलधियो
यतीन्द्राद्या माध्यंदिननियममारच्य विधिवत् ।

महाभक्त्या रङ्गाधिपवदनसौरभ्यभरितं
नतानीतं भक्तं विविधरसमास्वाद्य मुदिताः ॥ १५४ ॥

निरुन्धानं भास्वत्किरणकणिकाव्यापनकथां
समिन्धानं नानाकुसुमतरुपङ्क्त्या निविडया ।
दिवान्धानन्दैकप्रवचनचणं ध्वान्तगहनं
स पन्थानं रामावरजगुरुराटीकत मुदा ॥ १५५ ॥

वर्षद्भिः पुष्पवर्षं किसलयकपटैः पाणिभिः पाद्यमम्भो
माध्वीव्याजाद्दिशद्भिः फलभरमुचितं प्राभृतं प्रार्पयद्भिः ।
सामोदैः शाखिमुख्यैर्द्विजवरपरिषद्घोषमन्त्राभिलापान्
कुर्वद्भिः सेव्यमानः प्रतिपदमभितः पतत्भृच्छत्रभृद्भिः ॥ १५६ ॥

वाताङ्कूरप्रचारैः स्तवकपरिमलोद्गारिभिः कान्तिमत्या
गुञ्जद्भिर्मत्तभृङ्गैर्मधुरसविधया रम्यकुल्याप्रणाल्या ।
कावेरीतीरपूरप्रसरणसिकताप्रायभूम्या पदव्या
गच्छन्नच्छान्तरङ्गो यतिनृपतिरगादुत्तरद्वारवीथीम् ॥ १५७ ॥

स्वतः सुधाविलेपतः स्वशृङ्गसौधसंगति-
क्षतेन्दुबिम्बविक्षरत्सुधारसाभिषेकतः ।
सिताभ्रवृन्दसप्रभं हिमावनीध्रसंनिभं
दशावतारमन्दिरं व्यलोकयत् स सुन्दरम् ॥ १५८ ॥

कलिद्विषं ननाम तं विसीमभूमवारिधिं
निधिं सतां यदन्तिके वसत्यहो निरन्तरम् ।
तदीयसूक्तिधोरणीमधुप्रवाहमोहिता
भयाकुलाथवा कलेर्दशावतारसंततिः ॥ १५९ ॥

निगमविपणिमध्यादाहृतं गूढवृत्त्या
हृदयकपटपेट्यामन्तरन्तर्निधाय ।
अभयमहह चोरोऽदर्शयद्योगिनेत्रे
दशविधहरिमूर्तिव्याजमाणिक्यराशिम् ॥ १६० ॥

चिरन्तनोक्तिपालिकाकिरीटरत्नमालिका
धरेद्ध भद्रदीपिकाप्रणालिकानुकारिणी ।
सहासिकां समञ्चिता दशावतारभूमिका
रमापतेः क्षमातले नताक्षिभाग्यसंततिः ॥ १६१ ॥

अनन्तरमहमहमिकया यौगपद्येन हृद्येन रूपेणाभिरूपेण स्वस्वविषये समाकर्षन्तीं दाशार्हस्य दशावतारसंततिमित्थमभितुष्टाव शिष्टाग्रेसरोऽयमतिहृष्टधीः—

क्षीराम्भोराशिकन्यानयनरुचिरतास्तेयधौरेयकाय-
स्फायत्पक्षप्ररोहत्पवनपरिचयक्षुभ्यदभ्यन्तराब्धिः ।
प्राचीनः कोऽपि मीनस्तुहिनगिरिपरीणाहपारीणमूर्ति-
र्वेधोवेदाख्यचक्षुर्वितरणविलसत्कीर्तिपूर्तिर्विभाति ॥ १६२ ॥

गीर्वाणश्रेणिपाणिभ्रमितधरणिभृन्मूलपाषाणकोण-
व्यूहप्रत्यूहरोहत्कषणसमुदितात्यल्पकण्डूतिकृत्यः ।
लक्ष्म्याः प्रादुर्भवन्त्या जलधिसलिलतः पादविन्यासधन्य-
स्तन्यादन्यादृशीं नः कमठकुलपतिः काङ्क्षितानां समृद्धिम् ॥ १६३ ॥

यो जातः स्तब्धरोमा खुरपुटदलितक्षुण्णगोलक्ष्मभृ- दंष्ट्री घोणी स्तब्धरोमा क्रोडी भूदार शौकरक्रोड- नामस्वबर:।
द्धाटीजम्बालिताब्धिः स्तवपठितृमुनीन् रोमकूपेषु बिभ्रत् ।
भक्तानासेवमानाननवधिकमुदः स्तब्धरोम्णो वितेने
सोऽयं सज्जो जनानां भवजलधिजुषां तारणायाचिरस्ति ॥ १६४ ॥

आकण्ठं पौरुषं यः प्रथयति महितो मुख्यया सिंहरीत्या
हस्तप्रासं हिरण्यं तृणमिव नखतस्त्यक्तहृत्प्राक्षिपद्यः ।
प्रह्लादं योऽन्तरङ्गं व्यतनुत दनुजस्तम्भयुग्मावमर्दी
श्रीर्यस्याङ्कं प्रपन्ना जयति स जयताद्देवतासार्वभौमः ॥ १६५ ॥

प्राग्वाणीसंप्रदायप्रवचनरचनाचातुरीधुर्यवाचा
व्याकुर्वन् याचकानां प्रथमगुरुरयं याचनासंप्रदायम् ।
लक्ष्मीहस्तारविन्दग्रहविदितकरोपात्तदानाम्बुधारो
मायावी कर्म कीदृङ् नतजनभरणे नर्म वा निर्मिमीते ॥ १६६ ॥

आबिभ्राणं जटौघं शिरसि भुजशिखासीम्नि घोरं कुठारं
कण्ठे पद्माक्षमालां धनुरपि च करे तीक्ष्णबाणैः सनाथम्।
ब्राह्मं क्षात्रं च तेजो मिलितमिव महः किंचिदाश्चर्यचर्यं
मर्यादातीतवीर्यं लसति धुरि भृगो रेणुकायाश्च भाग्यम्॥ १६७॥

श्रीरामोऽमोघबाणः समिति विजयते कोऽपि भूमा विसीमा
भूमौ जोघुष्यते क्ष्माश्रुतिजनिमुनिवाग्डिण्डिमोऽत्र प्रमाणम्।
तैर्बाणैराशु गाढं तम इव किरणैर्भास्करो वारय त्वं
पक्षं मायाविलासिप्रकटितमखिलं रक्ष मत्पक्षरीतिम्॥ १६८॥

गर्वालम्बप्रलम्बाभिधविबुधरिपुप्रौढशुद्धान्तकान्ता-
पारम्पर्याक्षिपङ्केरुहपरिषदि यो वारिपूरं विधातुम्।
कालिन्दीमाचकर्ष प्रबलहलमुखात्तोयशुद्धाम्भूमा
रामो राकेन्दुधामा प्रणयजलनिधिं पातु रामानुजं माम्॥ १६९॥

अङ्घ्रिव्याक्षेपघाटी शकटविघटनापाटवं यस्य भेजे
प्राणान् मायाजनन्या द्रुतमहरत यत्स्तन्यपानप्रणाडी।
रिङ्खा यस्यार्जुनद्वंक्षपणमतनुत व्यालबालावलम्बा
यल्लीलोत्थानशैली समजनि स दिशोद्धोपडिम्भः शुभं नः॥ १७०॥

आरूढस्तुङ्गशृङ्गं तुरगपरिवृढं सादिरासीदनादिः
कुन्तं खेटं कृपाणं धनुरिषुधियुगीं वारबाणं वहन्यः।
व्याकुर्वाणोऽत्र रङ्गी यवनधरणिभृन्नाथजामातृभावं
कल्कीकर्तुं तदीयं कुलमपि मलिनं किंतु संदेग्धि कल्किः॥ १७१॥

स्तुत्वेत्थं हृष्टचेता झटिति यतिपतिर्यामुनाचार्यतीर्थं
गत्वाचम्यादसीयं सदनमथ समालोक्य नत्वाभिनन्द्य।
दिव्यं तस्यापदानं प्रणतजनसमुज्जीवनानां निदानं
संमोदानां निधानं बहुविधमुदयद्रोमहर्षं ब्रुवाणः॥ १७२॥

उत्सङ्गं भूषयन्त्या जलनिधिसुतया पाणिपङ्केरुहाभ्यां
हे भक्तेहैहि मा त्वं भज भयमिति धिक्कल्पयन्त्या समेतम्।
व्यक्तास्यं क्रूरदंष्ट्रं कुटिलतरनटद्भ्रूकुटीदारुणाक्षं
भक्त्या नत्वोपकण्ठं हरिमधिविपिनं रङ्गधामोपकण्ठे॥ १७३॥

श्रीरङ्गेन्द्राभिमुख्यं गतवति वहति श्रीमति स्वर्णनद्या-
स्तीर्थे निर्वर्त्य सान्ध्यं नियममथ समानम्य रङ्गावनीन्द्रम्।
आनन्दं कंचिदश्नन् विघटितपरमव्योमवीक्षाभिलाषः
श्रीरङ्गक्ष्माधुरीणध्वज इव शुशुभे योगिनां चक्रवर्ती ॥ १७४ ॥

अथ पाषण्डतरुषण्डखण्डनवेतण्डप्रकाण्डपाण्डितीभृति दुर्वारचार्वाकाखर्वगर्वसर्वस्वदावानलनिर्वापणधुर्वहधाराधरप्रौढिमति बौद्धसिद्धान्तध्वान्तध्वंसनभानुमति कणभक्षाक्षपादक्षपणकभिक्षुपक्षक्षपणदक्षकुलिशभृत्कौशलवति कुदृष्टिकुतूहलजालझञ्झानिललीलाकृति श्रीरङ्गराजधानीशिरोमणिरीतिमति भगवति श्रीरामानुजयतिक्षितिभृति श्रीवैष्णवश्रियमनुपद्रवमाचक्रवालमवनिवलयं नेतुं कौतूहलभरमुदूढवति प्रौढिमानमदसीयं सोढुमक्षमः समक्षममुष्य स्वपक्षं निर्वोढुं दृढघटितसंकल्पः शङ्कराचार्यकल्पो दुरभिमानपूर्तिरिव समूर्तिर्दिगन्तरविसृत्वरकीर्तिर्दर्शिताखिलप्रतिवादजनार्तिः विश्रुतविद्यापूर्तिर्यज्ञमूर्तिर्नामैकदण्डिनां चक्रवर्ती साकमनेकैः स्वान्तेवासिभिः शकटीशतारोपितकोशराशिः काशीदेशादञ्जसा समभजत श्रीरङ्गराजधानीम्।

मायावादं सशैवं विदलयतितमामेष रामानुजार्यो
लीनाः स्युर्मोहशास्त्रप्रवचनविधयो मामकीना वृथेति।
रोषाद्वा हर्षतो वा हरिमतभवतीत्यस्य दातुं प्रसिद्धिं
काशीविश्वेश एव प्रमथगणवृतो यज्ञमूर्तिः किमागात्॥ १७५॥

अथ यज्ञमूर्तिः श्रीरामानुजयतिसार्वभौमं भौममिव गीर्वाणगुरुं विनयादिगुणगुरुं श्रीरङ्गभूमिशिरोमणिं निजतेजःपराभूताम्बरमणिमालोक्य विस्मेरधीरविरलोदश्चद्रोमाञ्चकञ्चुकितमूर्तिर्गिरा गम्भीरयेत्थमुदाजहार—

विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापनपाण्डितीम्।
अश्नन्नलंचकार श्रीरङ्गं प्राग्यामुनो मुनिः॥ १७६ ॥

अधुना तद्वदेव त्वं तत्परित्राणकौतुकी।
तिष्ठसीति परिज्ञाय त्वरयाहमुपागतः॥ १७७ ॥

भारतायोधनन्यायादष्टादश दिनानि मे ।
वादयुद्धं प्रदेहि त्वं स्थिरां कीर्तिमवाप्नुहि ॥ १७८ ॥

विजेष्यसे यदि तदा भवत्पक्षसमाश्रयः ।
भवतश्चरणाम्भोजचञ्चरीको भवाम्यहम् ॥ १७९ ॥

आकर्ण्येत्थं तदुक्तं समदमनुपदं योगिनां चक्रवर्ती
सन्धां कांचिद्विबन्ध स्वयमपजयितां प्राप्नुयां चेत्तदानीम् ।
ग्रन्थत्यागं करोमीत्युचितमथ मुदा रङ्गभूयुद्धरङ्गे
वाग्धाटीतुङ्गघोटीमनटयदतुलं धीकशाचोदनाभिः । १८० ॥

अद्वैते न कदाचिदात्मघटना मानोज्झितत्वाद्भवे-
दप्रामाण्यमशेषवैदिकगिरां दुर्वारमुज्जृम्भते ।
जिज्ञासा न विशेषसङ्गरहिते प्रादुर्भवेद्वस्तुनि
ब्रह्मोक्तेर्गुणपूर्तिबोधनपटोर्नो लक्षणा युज्यते ॥ १८१ ॥

अज्ञानावरणं प्रकाशवपुषो न ब्रह्मणः संभवे-
दज्ञानित्वमतो भवेत्कथमतो मोक्षं च संभाव्यते ।
जीवन्मुक्तिमतं न जीवति जगन्मिथ्यात्ववादस्तथा
प्रत्यक्षादिविरोधतो न घटते ज्ञाज्ञादिभेदो न हि ॥ १८२ ॥

मिथ्यात्वं यदि नाम बाधिततया स्यादुत्तरज्ञानतो
नाधिष्ठानमपि प्रमाणपदभाग् बौद्धोक्तितो बाधनात् ।
ध्यानोपासनशब्दवाच्यधिषणामुल्लङ्घ्य वाक्यार्थज-
ज्ञानादेव विमोक्षमास्थितवतां स्यान्मोक्षदा नीचगीः ॥ १८३ ॥

आम्नायस्मृतिसूत्रसन्ततिगिरां वैयाकुली भूयसी
शूद्राणामधिकारवारणकथा ब्रह्मागमे स्यान्मुधा ।
आर्षव्याकृतिलङ्घनेन लघुता भूयिष्ठमाविष्कृता
स्वोत्प्रेक्षापरिकल्पितं मतमिदं व्याघातवन्नैधते ॥ १८४ ॥

इत्थं न्यायशतैर्यतिक्षितिपतिः सत्तर्कशाणोज्ज्वलै-
र्भिन्दानोऽपि मदावलेन्द्रमिव वक्रोक्तिं वदन्तं यतिम् ।
दीनः ससदशे दिने निजमठं लेभे हठात्कुण्ठधी-
र्दुस्तर्कान्धतमिस्रदुर्दिनकरे तस्मिन् महामायिनि ॥ १८५ ॥

अथ यतिकुलनाथो नाथोपज्ञं प्रवृत्तं प्रकटितसाधुवृत्तं गरीयोभिर्भूयोभिः कलिताखिलप्रमाणानुबन्धैर्विघटितभवबन्धैः सुघटितसर्वजीवजातोज्जीवनसत्यसन्धैर्यामुनेयप्रबन्धैः समिन्धानमखिलतमो निरुन्धानं पन्थानं निष्कण्टकीकर्तुं प्रवृत्तोऽहमधुना सकण्टकीकुर्यामिति चिन्तादन्तुरान्तःकरणो विरचितविविधविचारणः शरणीकृतस्वाराधनकरुणानिधिदेवचरणः कृतजागरणः क्षणं सुष्वाप।

तदनु भगवान् कृपानिधिः साक्षात्प्रादुर्भूय कृपातरङ्गैरिव शुभैरपाङ्गैरभिषिञ्चन् परभङ्गोपायमनपायं कंचिन्न्यायमित्थमुपादिक्षत्—

लक्ष्ये ब्रह्मणि तद्गतेन मनसा स्वात्मा प्रयोज्यः शरो
जीवेन प्रणवाभिधानधनुषेत्यर्थं ब्रुवाणां श्रुतिम्।
ब्रूहि त्वं जहि तं वदन्तमहितं पाहि स्वपादाब्जयोः
सङ्गत्या निजसाम्यमर्पय मतं स्वीयं प्रतिष्ठापय॥ १८६॥

अथ तत्क्षणमेव प्रबुद्धनयनपुण्डरीकः संयमिपुण्डरीकः प्रमोदनिर्भरः सत्वरः कृतप्राभातिकनियमः ससंभ्रमाभ्यागच्छदन्तेवासिस्तोमः प्रसन्नवदनसोमो गजगम्भीराभ्यागमः सभ्याभिनन्द्यमहिमा महिमान्यपटिमा हिमर्तुरिवाम्भोरुहवनं तमेकदण्डिमण्डलाध्यक्षं वीक्षामात्रेण संक्षोभयामास।

तदनु यज्ञमूर्तिरन्तर्भवदार्तिर्भग्नशृङ्ग इव पुंगवः कृतपक्षभङ्ग इव विहङ्गो विहतमदानुषङ्ग इव मातङ्गः समुत्खातदन्त इव दन्दशूको मन्त्रशक्तिकुण्ठितापसर्प इव सर्पः निर्धूतदर्पः सारज्ञतया भूयांसमनेहसं मनसि विभावयन्विशिष्टाद्वैतसिद्धान्त एव श्रुतिपरिषदां शुद्धान्त इति शुद्धान्तःकरणो राद्धान्तयंस्तस्मिन्नेव बद्धादरो यतीन्द्रचरणारविन्दाभ्यां स्वमुत्तमाङ्गमुत्तंसयन्नुत्तमां गिरमित्थमाददे—अवश्यमर्पयिष्यसि त्वमेव नचिरान्मह्यं पङ्केरुहवासिनीपरिवृढपरमसाम्यलक्षणं मोक्षम्। तन्निदानमिदानीमर्पय भवत्स्वाम्यमनौपम्यमतिरम्यम्। सम्यक्तर्पया निदंप्रथमालापकलापासदर्थोपलापाभिचारपारीणपामरप्रदर्शितापथपरिभ्रमणदूनमतीव दीनं मां सूक्तिसुधाधाराभिरपाकृतश्रुतिस्मृतिसूलगतज्वराभिः प्रेममधुराभिरिति।

अमुष्य धिषणानिधेर्विनयभूषणं भाषणं
निशम्य यतिपुंगवः प्रकटयन्नयानां ततिम् ।
निजाङ्घ्रिकमलाश्रयं विभवमद्भुतं प्रापयन्
विभूषयदमुं कृपानिधिपदाख्यया स्वाख्यया ॥ १८७ ॥

अध्याप्य द्रामिडान् वेदान् प्रतिष्ठाप्य मठान्तरे ।
तं पश्यन् मुमुदे योगी प्रतिबिम्बमिवात्मनः ॥ १८८ ॥

आख्यावैभवसाम्यसंभवभिया हित्वा मठं स्वं हठा-
द्गत्वाचार्यमठं व्यराजततरां योऽहंक्रियावर्जितः ।
तेनाराधितपादपद्मयुगलः श्रीरङ्गभूमीशिरो-
भूषारत्नरुचिं वहन्विरुरुचे श्रीलक्ष्मणार्यो मुनिः ॥ १८९ ॥

---

इति रामानुजाचार्यविरचिते श्रीरामा-
नुजचम्पूप्रबन्धे षष्ठः स्तबकः

---

॥ अथ सप्तमः स्तबकः ॥

श्रीमद्वेङ्कटभूमिभृत्पतिपरीचारैकदत्ताशयं
श्रीरामायणगूढभावविशदीकारप्रियंभावुकम् ।
श्रीशैलाह्वयपूर्णदेशिकमणिं द्रष्टुं वहन् कौतुकं
श्रीरामानुजसंयमिक्षितिपतिः सञ्जीवभूवाञ्जसा ॥ १ ॥

अथ तत्क्षणमेव काञ्चीनिवासावसर एव स्वात्मना प्रेषितमति-हर्षितं श्रीवैष्णवद्वन्द्वमन्द्वन्द्ववैभवं श्रीवेङ्कटाचलादभ्यागतं सभ्यादरणीयगोविन्दनामधेयस्य मातृष्वसेयस्यालभ्यश्रीवैष्णवपदसाम्राज्य-पदमूर्धाभिषेकमहोत्सववैभवं यतिसार्वभौमस्य कर्णाध्वन्यताधन्यं विधातुमुपचक्रमे क्रमेण ।

श्रीमल्लक्ष्मणयोगिपुंगव भवत्संप्रेषितां पत्रिकां
दृष्ट्वा तत्क्षणमेव रक्षणकृते गोविन्दसूरेर्गुरुः ।

आज्ञातो वृषभक्ष्माधरविभोरभ्यागतो वेगतो
लेभे कामपि कालहस्तिनगरीसीमावनिं पावनीम् ॥ २ ॥

तदनु

बिभ्रत्काममपि शाटिकां कटितटे चूतप्रवालद्युतिं
भस्मोद्धूलनधूसराङ्गकतया कूश्माण्डतुल्याकृतिः ।
रौद्राक्षं वलयं गले विरचयन्नुद्बन्धरज्जूपमं
स्वांसे न्यस्य घटं तटाकमगमद्गोविन्दसूरिस्तदा ॥ ३ ॥

भो तपस्विन्, प्रशस्तकेशशालितया प्राप्तकेशवनामधेयस्य चिरन्तनसरस्वतीशेखरशताभिधेयस्य देवतासार्वभौमप्रभाववतो भगवतोऽभिषेकविधिं विधाय कपालिनः कृत्तिवाससो जटिलस्य भिक्षोरभिषेकविधिं कुर्वाणः कलमकेदारमुदारमुल्लङ्घ्य नलवनं सिञ्चतः पामरस्य शैलीमञ्चसि । मुञ्चेदमाचरणमनुचितमिति गुरुणा चोद्यमानोऽप्यभेद्यमानसः सान्तर्हासं सोऽन्तर्जगाम ।

अथ बहुकालाद्भूयोऽप्याचार्यचूडामणिरनुजिघृक्षाभूम्ना समभ्यागम्य देवतान्तरपारम्यसाम्यादिशङ्काङ्कुरच्छेदनासिपुत्रिकां काञ्चन पत्रिकां कालहस्तीश्वराभिषेकाम्भोहरणपदव्यां भव्यां प्राक्षिपत् ।

आदायाध्वनि यामुनार्यवचसा स्वाभाविकेत्यादिना
रम्यां तामथ पत्रिकामनुपदं पश्यन् शिरः कम्पयन् ।
अभ्यर्णं समुपेत्य तूर्णमवदत्पूर्णं गुरुं वश्च्युतं
किं वास्तीत्यथ सोऽपि तं प्रतिजगौ नेत्यस्मदीयं तथा ॥ ४ ॥

अथ तयोरुक्तिप्रत्युक्ती सरसगम्भीरयुक्ती समुदजृम्भेताम्—

किं युष्मदीयं वस्तु च्युतम् । नास्मदीयं च्युतं भवति । किं सर्वेषां युष्माकमेकमार्गाश्रयणम् । अकलङ्कतैव तत्र निदानम् । किं केवलानां शङ्काकलङ्कः । न वयं केवलाः, किन्त्वर्थवन्त एव । किं बन्धूनां देशान्तरप्रस्थापनाय भवतामभ्यागमविधिः । न तथा, किन्तु स्वैरचारिणां पशूनामाहरणायास्मदागमनम् । किं तिर्यगूर्ध्व-

मिति व्यवस्थया। आर्जववती जाग्रती वक्रिमपदाश्रयणपटिमानं विघटयति। नवीनेयं भवतां वाचोयुक्तिपारम्परी प्रादुर्भवति। प्राचीनालापकलापोऽप्येतत्सहचरभावमालम्ब्य किमपि माङ्गल्यं बिभर्ति।

श्रीशैलपूर्णवचसा निर्जितोऽयं निरुत्तरः।
सर्वोत्तरोऽपि गोविन्दः प्रविवेश शिवालयम्॥ ५॥

अथ भगवान् रामानुजमुनिस्तदिदं दुरवगाहगम्भीरं महार्थगर्भं वाक्यसन्दर्भमद्भुतमाकर्ण्य तद्भावं स्वान्तेवासिभ्यः स्पष्टमभ्याचष्ट—च्युतवर्जितोक्तिः शुद्धात्मस्वरूपमभिप्रैति। अकलङ्कवर्तनीकीर्तनमखिलतमःकर्शनं श्रीवैष्णवदर्शनं प्रदर्शयति। अर्थवत्ताभिधानं हरिदास्यैकधनसम्पन्नतां प्रथयति। पशुक्रयार्थागमनकथनं ज्ञानहीनमानवसन्मार्गनयनावश्यंभावं विभावयति। ऋजुसमाश्रयणभाषणमूर्ध्वपुण्ड्रधारणमुत्तारणमिति बोधयति। प्राचीनवचनानुगुणतात्वकथनं पाञ्चरात्रागमस्य निगमैककण्ठ्येनाविचाल्यं प्रामाण्यं सूचयति। तस्मादस्मत्सिद्धान्त एव सर्वस्माज्ज्यायानिति व्यक्तमुक्तं भवति। भूयोऽपि ताभ्यां श्रीवैष्णवाभ्यामित्थमभिहितम्—स गुरुः पुनरागम्य कस्यचिदुपवनतरोरधस्ताद्गोष्ठीमाबध्य,

व्याकुर्वन् वकुलाङ्कसूरिफणितिं माध्वीरसस्यन्दिनीं
वेदान्तस्मरणेतिहासवचनप्रायैर्वचोभिः शुभैः।
गाथां कामपि नाभिपद्मजविधेर्नारायणात्पूजनं
नान्यस्योचितमित्युदाहृतगभीरार्थां तथा व्याकरोत्॥ ६॥

आरूढः स च पाटलीविटपिनं पूजाकृतेर्धूर्जटेः
पुष्पोपाहरणाय काश्चन पठन् गाथा मुदा शाम्भवीः।
गोविन्दोऽवहितो निलीय विटपस्तोमान्तरे सादरं
श्रुत्वैनां मधुरां गिरं कुशलधीर्भेजेऽनुतापं हृदि॥ ७॥

एतावन्तमनेहसं नलवनं सिक्तं मया पापिना
कूपाम्भोभिरहो फलोत्तरतरे दिव्ये तरौ जाग्रति।

दुर्गाथाः पठता मया विरचितं बन्यन्तराक्रन्दनं
पुष्पैर्भूषयता शिवं हि विहिता हा हा शवालंकृतिः ॥ ८ ॥

इत्थं स्वं परिकुत्सयन् परिजहत्पेटीं हठाद्दूरत-
श्छिन्दन् कण्ठगताक्षहारवलयं स्वं कण्ठपाशं यथा।
वेगाद्दुर्भरदुःखभारभरणाशक्त्येव भूम्यां पतन्
वृक्णो वृक्ष इवापतच्चरणयोरुद्घोषपूर्वं गुरोः ॥ ९ ॥

आलिङ्ग्य गाढं प्रणयाभिपूर्णः
श्रीशैलपूर्णस्तनयं भगिन्याः ।
गाङ्गैस्तरङ्गैरिव तं कटाक्षैः
श्रीवैष्णवाध्यक्षपदेऽभ्यषिञ्चत् ॥ १० ॥

गुरुकुलपतिरेनं भागिनेयं प्रनष्टं
धनमिव समवाप्य श्रीनिवासाय दत्त्वा ।
अखिलमपि रहस्यं पञ्चसंस्कारपूर्वं
प्रकटमुपदिदेश प्रेमपूर्णः स पूर्णः ॥ ११ ॥

तदिदमाकर्ण्य कर्णामृतं परिपूर्णमनोरथो यतिकुलनाथो महत्तरै-र्महापूर्णप्रभृतिभिः सह मोदमानो यामुनसमानस्ताभ्यां श्रीवैष्णवाभ्यां सबहुमानं भूयिष्ठं पारितोषिकं प्रदाय चिराय गोविन्दमिन्दुमिव राहुमुखविनिर्मुक्तं निरस्तनीहारभरमिवाहस्करं जानकीजानिमिव शैवधर्मोद्दलनार्जितोर्जितकीर्तिं विरचितवैष्णवधर्मपूर्तिं कृष्णमिव दूरीकृतकालहस्तीश्वरप्राबल्यं विहितसत्यानुकूलमतुल्यमिव माणिक्यं लभेय श्रीशैलपूर्णकृपाकटाक्षमहिम्नेति तं श्लाघयामास ।

जातु लोचनपदं भजन्नरो
मातुलो भवति यस्य रंहसा ।
मातुलस्य महिमाऽस्य भूतले
भातु लोकहितकारिणो महान् ॥ १२ ॥

श्रीशैलपूर्णसंसर्गाद्गोविन्दो वैष्णवोऽजनि ।
कालायसमिव स्वर्णं सिद्धौषधरसान्वयात् ॥ १३ ॥

जन्मना जायते शूद्रः कर्मणा जायते द्विजः ।
पञ्चसंस्कारसम्पत्त्या वैष्णवश्च तथा ध्रुवम् ॥ १४ ॥

इत्थं महतां शक्तयो मणिमन्त्रौषधानामिव दुरवगाहगम्भीरा भूयस्यः संभविष्यन्ति । किमत्र चित्रमिति ।

तद्दीक्षोत्सुकमानसो यतिपतिर्गोष्ठ्या महत्या समं
रङ्गाद्वेंकटमञ्चितुं प्रचलितो रङ्गेश्वरस्याज्ञया ।
विन्दन्नुत्तमपुण्डरीकनयनश्रीदेहलीवल्लभ-
श्रीकाञ्चीरमणादिकान् कुसुमितान् वृक्षानिवागादलिः ॥ १५ ॥

अभ्यागच्छन् प्रमादात् क्वचन विपथगो वेदमार्गप्रतिष्ठा-
चार्यः पप्रच्छ कंचिद्धत झटिति घटीयन्त्रतन्त्रस्वतन्त्रम् ।
पन्थानं मानवोऽयं प्रकटतरमुपादिक्षदेनं स योगी
वैकुण्ठान्मानवोऽयं स्वयमुपगत इत्यादरेणाभ्यपश्यत् ॥ १६ ॥

समागताभ्युद्गमकामतो वा
पराङ्कुशादीक्षणकौतुकाद्वा ।
उपत्यकायां कमलानिवासं
निषेदिवांसं प्रणनाम योगी ॥ १७ ॥

आरोढुं फणिपुंगवात्मकतया भूमीधरं शङ्कया
सूरीणां प्रवरे प्रपद्य यमिनां पत्यौ निवृत्त्युन्मुखे ।
श्रीवासेन ससंभ्रमं सकुतुकं संप्रेषिताः संमुखं
श्रीशैलान्वयपूर्णदेशिकवरानन्तार्यमुख्या बुधाः ॥ १८ ॥

अमुं पूर्णं पूर्णं शुभगुणततीनां विततिभिः
समायान्तं भान्तं सह परिजनैर्वेंकटविभोः ।
ववन्दे श्रीरामावरजगुरुरुद्दामसहिमा
समाश्लिष्टो गाढं विनयगुरुणा तेन गुरुणा ॥ १९ ॥

तदनु सर्वे ते खर्वेतरानुनयवचनरचनाचातुर्यधुर्या देशिकवर्या रामणीयकनिधेरिन्दिरानिधेः ब्रह्मादिदुर्लभस्य सन्निधानस्य वेंकटाद्रिशिखर सन्निधानस्य काननचन्द्रिकासोदरभावपरिजिहीर्षया भगवद्रामानुजमुनिसार्वभौममित्थमभ्यर्थयांचक्रिरे—' अयमुर्वीधरो दर्वीकरग्रामण्यवतार इति विनयातिरेकेण भवत्पदमनारूढवति प्रणतमानवरक्षणदीक्षावलम्बो पङ्केरुहवासिनीकुटुम्बी वानराणामुपभोग्यो भविष्यति। किंच पर्यङ्कविद्यावैशद्यवतां कथमेतचोद्यं प्रादुर्भविष्यति ' इति । तदनु कृतकायशोधनो विनयधनो यतिधुरंधरो वातंधयवसुंधराधरमधिरुरोह ।

विक्रान्तैर्मेघवृन्दैरिव बहुलदलश्यामलैर्वृक्षजालै-
र्वंशस्तम्बैः सुरेन्द्रैः सुखमवतरितुं क्लृप्तनिःश्रेणिकल्पैः ।
गूढैर्व्यालम्बमानाम्बरभरणकृतस्थाणुसंभावनीयै-
र्दीप्तैर्वप्रैर्महीध्रैरिव परिविलसद्धातुभिर्वप्रजालैः ॥ २० ॥

अम्भोदीप्तैः प्रदीप्तैरघटितघटनाशक्तिमुद्भावयद्भि-
र्गीर्वाणैर्ब्रह्मरुद्रप्रभृतिभिरभितः कल्पितैरिष्टसिद्ध्या ।
उत्फुल्लैः शोणपद्मैः प्रतिलहरि मिलद्भानुबिम्बप्ररोह-
प्रायैरुद्भासमानैरमलमणिमयादर्शकल्पैः सरोभिः ॥ २१ ॥

विस्तीर्णैरातपत्रैर्मरतकमणिभिर्निर्मितैः स्थूलकाण्डै-
र्मुक्तागुच्छाभिरामैरिव बहुलदलैः श्यामलैः पुष्पवद्भिः ।
संतानैश्चामराणामिव पृथुलतरैर्निर्झराम्बुप्रपातै-
र्नागैशानङ्गभोगैरिव विपुलपटैः केतुभिः शोभमानम् ॥ २२ ॥

आबिभ्राणं किरीटं घनमणिखचितं हाटकं कोटिदीप्य-
द्देवेन्द्राश्मप्रकाण्डं महदिव विलसद्धातुकूटं महीध्रम् ।
व्याकुर्वाणं गिरीणां विभुरिति विभवं सार्वभौमो यतीनां
संपश्यन् वेङ्कटाद्रिं परिणतमिव दृग्भागधेयं ननन्द ॥ २३ ॥

आरोहणारोहणजातखेद-
निवारणार्थं हरिणा नियुक्ता ।

कारुण्यसारिण्यतिशीतलेव
कर्पूरकुल्यास्य मुदं ततान ॥ २४ ॥

आरुह्य गण्डोपलमाश्रिताना-
मागच्छतामर्थभृतां समृद्धिम् ।
आलोकयन्तं मुदमुद्वहन्तं
श्रीकान्तमालोक्य जहर्ष योगी ॥ २५ ॥

अथायमम्बरमणिबिम्बशाणोपलोत्तेजनोज्ज्वलतरनानारत्ननिकर-कमनीयशातकुम्भमयकुम्भसंभावनीयम् अम्बरपिशङ्गीकरणहारिद्र-द्रवायमाणकान्तिपूररमणीयं विमानवरमानन्दनिलयमनिमेषमालोक-मानः पुनः स्वयमानन्दनिलयो बभूव यमिनां पतिः ।

स्वयं यमी स्वामिसरोऽवगाहं
विधाय तत्संनिभमभ्रनीलम् ।
पद्माभिरामं सरसं गभीरं
ब्रह्म प्रविश्य प्रमुदं प्रपेदे ॥ २६ ॥

विहाय वैकुण्ठमकुण्ठवैभवं
श्रिया समं स्वामिसरस्तटीवने ।
मृगादिभिः साकमहो विहारं
करोति सूरिप्रवरैरिवाद्भुतम् ॥ २७ ॥

उरःस्थलक्ष्मीस्तनभारभीरुः
कटीतटीकल्पितसव्यपाणिः ।
प्रदर्शयन् पादयुगं शरण्यं
करेण दाक्षिण्यवता विभाति ॥ २८ ॥

ख्यातोऽधमर्णः शरणोक्तिभाजां
हन्तोत्तमर्णः कथमीड्यसे त्वम् ।
किं युज्यते वार्धुषिकत्ववृत्तिः
प्रशस्तसाम्राज्यवतस्तवापि ॥ २९ ॥

अप्राकृतं किमपि मानुषमांसचक्षु-
र्धामातनोषि निजधाम विसीमभूम ।

कालाम्बुवाह इव शीतलिमाभिराम-
मालम्ब्य शैलशिखरं करुणाम्बुधारी ॥ ३० ॥

दिवि भुवि विनतानां वासभाजामभीष्टं
कलयितुमभिलाषी यौगपद्येन देव ।
निजपदभजनाद्यैः स्तन्यदानोत्सुकस्त्वं
यमलतनयमातुर्वैखरीमाविभर्षि ॥ ३१ ॥

विहाराहारेषु प्रणयरहितेयं मृगतति-
र्गुणाकृष्टा सूरिप्रवरपरिषद्विभ्रमवती ।
सदा पश्यन्ती त्वां कुवलयदलश्यामलरुचिं
विसीमानं वाचामपि च मनसां मोदमयते ॥ ३२ ॥

किं तप्तं भवता तपो वृषगिरे यत्सिन्धुकन्याकर-
क्रीडाम्भोजसनाभिकं स्थिरवचश्श्रुडा वरोत्तंसति ।
यद् ध्येयं हृदयाम्बुजेषु यमिभिर्यद्भक्तरक्षागतौ
कण्डूलं तदिदं बिभर्षि शिरसा पादद्वयं श्रीनिधेः ॥ ३३ ॥

भूभाजां देहभाजां रचयितुमवनं कौतुकात् कैटभारिं
श्रीवैकुण्ठादकुण्ठं क्षितितलमनयद्भोगिनां चक्रवर्ती ।
प्रेम्णोद्दाम्नाधुनायं घटयति फणी शृङ्गमध्ये तमेनं
माद्दक्षाणां समक्षं वृषभधरणिभृत्प्रौढिमाढौकमानः ॥ ३४ ॥

इति स्तुत्या हृष्टं वहु बहुमतं तीर्थमुखतो
दयादृष्ट्या सिञ्चन् वृषशिखरिनेतेत्थमवदत् ।
मया कावेर्यन्तःपुलिनभुवि पूर्वं समुदितं
पुनश्चोक्तं शाधि त्वमुभयविभूतिप्रभुपदम् ॥ ३५ ॥

कीर्णं गोव्याघ्रसङ्घैरहिनकुलकुलैः सिंहमातङ्गयूथैः
काकोलूकावलीभिर्हयमहिषगणैः कीशगोपुच्छजालैः ।
निर्वैरैर्विष्णुभक्तैरिव वनवदनैः सान्द्रमद्रिं समन्ता-
न्नानावृक्षाभिरामं यतिकुलनृपतिर्वीक्षमाणो जहर्ष ॥ ३६ ॥

दिव्यं नव्यं रसालं फलममृतमिति श्रीनिवासोपभुक्तं
भुक्त्वा बीजं तदीयं क्वचन विरचयन् मुदितबीजं व्यतानीत्।
सोऽयं शाखोपशाखं तरुरजनि महान् यस्य लोको विचिन्वन्
पत्रं पुष्पं फलं वा धनमिव लभते मोक्षलाभाभिलाषी ॥ ३७ ॥

श्रीनिवासामृतं पीत्वाधित्यकायां दिनत्रयम् ।
उपत्यकायामेकाब्दं पपौ रामायणामृतम् ॥ ३८ ॥

श्रीमद्रामायणार्थं सकलमपि निजान्मातुलादार्यवर्या-
दाकर्ण्यैकाग्रचित्तः प्रपदनहृदयं मन्त्ररत्नैककण्ठम् ।
तद्दत्तं पूर्णपात्रं निरवधिककलापूर्णपात्रं पवित्रं
चारित्रं धारयन्तं यतिनृपतिरथालब्ध गोविन्दसूरिम् ॥ ३९ ॥

पुण्यावर्ताभिरामं सुरभिलममलं शीतलं श्यामलाभं
पद्मिन्या भासमानं कमलवदनया चारुकल्याणवल्ल्या ।
हृत्तापघ्नं तटाकं तमिव तटगतं वीरराम निकामं
गम्भीरं द्रागजगाहे यतिकुलनृपतिः शालिहोत्रावगाह्यम् ॥ ४० ॥

अन्नं जलं स्थलमपि त्रितयं प्रयच्छे-
त्यादाय वृद्धवपुषा पुरुषः पुराणः ।
श्रीशालिहोत्रसदने शयितः फणीन्द्रे
तन्मौलिकल्पितकरोऽजनि योऽब्जनाभिः ॥ ४१ ॥

क्लिष्टो गोविन्दसूरिर्गुरुविरहभरात्प्रेषितो योगिनेत्रा
विक्रीता या सुगोत्रा वितरति तृणमित्यार्यवाचा निराशः।
काञ्चीमञ्चन्तमासः पुनरपि यमिनामग्रगण्यं तदीयं
पादाम्भोजं शरण्यं निधिमिव कलयन्नास्त विस्तारकीर्तिः ॥ ४२ ॥

अथ यतिकुलनाथः कूरनाथाद्युपेतः
कनकसरिदुपान्तं कान्तमभ्येत्य वेगात् ।
तटभुवि पुरुषाणामुत्तमं वीक्ष्य साक्षा-
दकृत नयनपात्रीं रङ्गभूमीसमृद्धिम् ॥ ४३ ॥

जननीमिव रङ्गराजधानीं
निजविश्लेषभरासहां निषेव्य ।

अनुनीय च रङ्गिणं प्रणम्य
प्रमदं कंचिदवाप भोगियोगी ॥ ४४ ॥

अथ बान्धवा विषयविमुखं वेदान्तचिन्तैकसंमुखं गोविन्दासक्तहृदयं गोविन्दसुधियमतिनिर्बन्धेन यतिवृन्दारकाभ्यनुज्ञया कंचित्कालं सांसारिकसुखरतं कर्तुं प्रायतन्त। गृहे वसन्तमपि सांसारिकभोगविमुखं तं दृष्ट्वा,

विरक्तिरास्ते सव्यक्तिर्गोविन्दाह्वयधारिणी ।
इति निश्चित्य ते सर्वे निराशा निर्ययुस्तदा ॥ ४५ ॥

अत्यद्भुतमथोदन्तं विज्ञाय यतिभूपतिः ।
स्वाश्रमेण स्वनाम्ना च प्रेम्णा तं पर्यभूषयत् ॥ ४६ ॥

अटन्तं रथ्यायां परिषदि लसन्तं सुमनसां
प्रणम्य श्रीरामावरजमथ मूकः शुभवचाः ।
भुवं त्रातुं शेषः परमपदतः प्रोदित इति
प्रभावं व्याख्याय प्रकटतरमन्तर्धिमगमत् ॥ ४७ ॥

श्रीरङ्गैश्वर्यधुर्ये यतिकुलतिलके भासमाने निकामं
स्थानस्थाः साभ्यसूया निजपदविलयभ्रान्तिभाजः सरोषाः ।
भिक्षायामर्पयित्वा विषमतिपरुषं भिक्षुमेनं बुभुक्षुं
मङ्क्षु त्वं मारयार्थं भज बहुलमिति प्रेरयांचक्रुरेकाम् ॥ ४८ ॥

श्रीरामानुजमारणोत्सुकमतिः सा पूतनावैखरीं
प्राप्ता कांचन वञ्चनां धृतवती मातेव मान्याकृतिः ।
भिक्षां दातुमचोदयत् सगरलां तस्मै निगूढं स्नुषा-
मर्थाशाविवशाशयाः क्षितितले किं वा न कुर्युः स्त्रियः ॥ ४९ ॥

अथ दत्तात्रेय इव जगद्रक्षाभिक्षुवेषभाजि स्वं गृहाङ्गणमधितिष्ठति,

सा साध्वीकुलमौलिमण्डनमणिः श्वश्रूपिशाचीं खलां
लोकत्राणपरायणं यतिपतिं चावेक्ष्य चिन्ताकुला ।

भिक्षां दातुमदातुमप्यचतुरा नत्वाग्रतस्तं ततो
दत्त्वा तां सभयानुकम्पमनघा तस्थौ सकम्पाकृतिः ॥ ५० ॥

भिक्षां तां जन्तवे दत्त्वा तत्क्षणं वीक्ष्य तत्क्षयम् ।
भिक्षाटनं विनाऽभक्षो लक्ष्मणार्योऽवसद्यतिः ॥ ५१ ॥

अथोपवसन्तमतिवसन्तमधिरङ्गावनि वसन्तमागमान्तामृतपानमाचरतं मुनिवरं तमवगम्य श्रीमान् गोष्ठीपूर्णो वात्सल्यपरिपूर्णो वत्समिव गौरनुग्रहीतुं सत्वरमभ्याजगाम ।

अथाध्यक्षं यतिकुलाध्यक्षमसह्यतरचण्डातपतप्तवालुकायां सह्यजापगायां प्रणमन्तमवेक्षमाणो भिक्षार्पणपुरुषपरीचिक्षिषया क्षणमुपेक्षमाण इव तूष्णीमवतस्थे ।

आत्रेयान्वयवार्धिशीतकिरणो रामानुजार्यः सुधी-
रुत्थाप्यादरनिर्भरो यतिपतिं संश्लिष्य दोर्भ्यां दृढम् ।
म्लानं माल्यमिवातपे सुमनसामस्याङ्गमाढौकते
किं त्वं सांप्रतमूर्ध्वचूड जडवत् क्रूराशयोपेक्षसे ॥ ५२ ॥

इति रुषा परुषाक्षरमुद्गिरन्तं बुधवरं तं श्रीमद्रामानुजमुनिमाहानसिकसाम्राज्यधुरामधिरोप्य निर्धूताधिः श्रीगोष्ठीपूर्णसुधीः श्रीरङ्गधुरीणं प्रणम्य तत्क्षणमभ्यविन्दत स्वपुरीं केसरीव दरीम् ।

श्रीरङ्गामृतदेशिकाह्वयधरः स्थानाधिकार्यग्रणी-
ग्रामण्यं यमिनामगण्यविभवं सेनान्यमन्यं हरेः ।
मान्यं सोढुमशक्नुवन् बहुविधां बाधां व्यधात्तद्भयात्
सोऽयं रङ्गपुरीं विहाय सरयः श्वेतावनीध्रं ययौ ॥ ५३ ॥

तदनु,

श्रीरङ्गसिंहासननायकेन
पाण्ड्येश्वरवरेण प्रणयेन भक्त्या ।
संप्रापितः पूर्ववदेव रङ्गं
संपूजितोऽवर्तत योगिनेता ॥ ५४ ॥

तदानीं श्रीमत्कूरकुलाम्भोधिकौस्तुभमणिर्देशिकचूडामणिर्निजाचारप्रतिष्ठापितवेदप्रामाण्यो निरवधिकारुण्यो निगमान्तविदग्रगण्यः प्रह्लाद इव तृणीकृतहिरण्यो मैत्रावरुणिरिवाजहद्दाक्षिण्यो विधिरिव सत्यैकवसतिः श्रीपतिरिव श्रीवत्सचिह्नाभिख्याशोभितः मृडानीपतिरिव कलानिधिशिरोमणिः सुत्रामेव सुधर्मैकनिवासभूमिः भानुमानिव लोकाभ्यन्तरतिमिरापहारी चन्द्रमा इव कुवलयोपकामी जातवेदा इव जगत्प्राणबन्धुः विश्वामित्र इव विविधशास्त्रकौशलशाली अत्रिरिवानसूयाभिरामः राम इव रामानुजपरिचर्याप्रकटितप्रेमा लक्ष्मण इव दाशरथ्यनुबन्धलक्ष्मणाभिनन्दितो भरत इव भागवतपदत्राणैकसक्तचित्तः शत्रुघ्न इव भारतोक्त्यनुसारिव्यवहारः कमलाकर इव सदालिलालनीयः रत्नाकर इव सद्गुणरत्नरमणीयः निजदर्शनस्पर्शनादिसञ्जीविताखिलजीवराशिरान्नृशंस्याम्भोराशिर्वकुलकुसुममालापरिमलवासितं वर्णितसकलागमरहस्यार्थजातं प्रकटितात्महितशुभवृत्तं श्रीवृत्तं नाम प्रबन्धं विघटितभवबन्धं सभावबन्धमावर्तयञ्छुञ्छवृत्त्या वर्तयन्नद्भुतचरित्रो जगत्पवित्रः पावनकलत्रः श्रीमन्तं नारसिंहवपुषमाश्रिताभिमतपुषं तद्विरोधिपरुषं पुरुषमाराधयन्नेधयामास । तदनु,

आम्नायान्तगभीरभावविशदीकारप्रियं भावुकं
श्रीवृत्तं परिकीर्तयन् गुणनिधिः श्रीकूरनाथः सुधीः ।
श्रीरङ्गामृतदेशिकं द्रमिडवाग्गुम्भप्रवीणं शनै-
राकर्षन् यतिशेखराङ्घ्रिशरणं चक्रे कटाक्षैः कृती ॥ ५५ ॥

स्वानुष्ठानकनिष्ठीकृतवसिष्ठो ब्रह्मनिष्ठागरिष्ठो विदुषां वरिष्ठोऽयं स्वकृपाकटाक्षसञ्जीवितेन तेन परिणतपुरातनभागधेयेन परिज्ञाताखिलोपनिषदभिधेयेन श्रीरङ्गामृतदेशिकनामधेयेन विधेयेनाभ्यर्थनासहस्रेण कस्मिंश्चित्पैतृककर्मणि निमन्त्रितो वैराग्ययन्त्रितोऽपि गुर्वाज्ञापरतन्त्रो भुक्तिसमये तद्वंश्यानां शाश्वतमुक्तिदानपत्रिकां प्रत्याययितुकामः श्रीरङ्गराजपत्रिकामभ्यर्थ्य संगृह्य अध्वनि सध्वनि विधूनितद्रविणाभरणाद्यखिलोपकरणः सकलपाप-

पाटनकृपाण्यां स्वर्णापगासलिलवेण्यां परिकल्पितमज्जनो विरचित-पत्रिकामात्रभरणो विनयाभरणो विचित्रचारित्रो वेपमानगात्रो यतिबृन्दारकमठद्वाराभ्यर्णभुवि मुहूर्तमवतस्थे ।

किमर्थो नैष स्यान्मठभगवदाराधनकृते
किमर्थं व्यर्थं त्वं व्यकिर इति योगिक्षितिभृता ।
परीक्षार्थं पृष्टो गुरुतिलक एवं प्रणिजगौ
किमुद्वारं रोद्धुं प्रभवति जगत्यामपि कृती ॥ ५६ ॥

अथ सविनयं समर्पितां चिरन्तनोक्तिविततिपुत्रिकां श्रीरङ्गराज-कङ्कपत्रिकां निधिमिव गृहीत्वा विनयनिधेर्दाशरथेर्हस्ते वितीर्येत्थ-माशिषं प्रयुयुजे—

श्रीरङ्गराजकैंकर्यसाम्राज्यं परिपालय ।
आचार्यकं च जगतामाचरन् विजयीभव ॥ ५७ ॥

आबिभ्राणोऽथ चूडामणिमिव शिरसा शासनं योगिनेतुः
श्रीरङ्गैश्वर्यरक्षापटुतरधिषणः सोऽयमार्याग्रगण्यः ।
तत्तत्स्थानव्यवस्थां समतनुत परीचारवृत्तौ श्रितानां
सन्मान्याद्यापि सेयं समुचितघटना निर्विघातं विभाति ५८ ॥

अथ समुदितप्रज्ञारविः श्रीरङ्गामृतकविरनादिकालप्रवृत्तानन्ता-पचारमनाघ्रातसदाचारमनाकलितात्महितविचारमतिवेलापथप्रचारम-विच्छिन्नविषयाटवीसंचारमननुष्ठितसाधुजनोपचारं विहितबहुवञ्च-नमकिंचनमपि मां नानाविधोज्जीवनोपायप्रपञ्चनेन स्वीकृतयतिचक्र-वर्तिचरणारविन्दसमर्चनमारचय्य निर्हेतुककृपालयः स कूरकुलाब्धि-कौस्तुभमणिर्देशिकाग्रणीरिति स्वकृतार्थतामनुसंदधानः कृतस्ववा-क्साफल्याभिसन्धानः स्वकीयद्राविडागमपाण्डित्येन कुम्भीभुवं कुम्भीभुवमेव लज्जया प्रवेष्टुकामं कुर्वाणः श्रीरामानुजचरणारविन्दयो-र्बहुधा किंकुर्वाणस्तत्प्रख्यातिमात्रस्तोत्रपराः परःशताः कृतीर्जग-दनुग्रहप्रवणदेशिकगणप्रार्थनासहस्रेण कथंचित् समधिगततदभ्यनु-ज्ञानो वकुलाभरणादिदिव्यसूरिपरिषत्प्रावण्यादिपूर्वकगुणगणनरम-णीयमन्तादिरूपाष्टोत्तरशतगाथासंदर्भकमनीयं कमपि प्रबन्धं निरमि मीतामितभक्तिरद्भुतशक्तिः ।

अनन्तरमेनां कृतिं कृतेक्षुरसन्यक्कृतिमधिगताखिलपुरस्कृतिं विरचितविमततिरस्कृतिममृतस्तुतिमिव सुमनसां मण्डली पातुमियेष ।

यतीन्द्रः प्रतिजग्राह श्रीरङ्गामृतदेशिकम् ।
अनुजग्राह तां गातुं कृतिं रङ्गेशसंनिधौ ॥ ५९ ॥

गीतां गीतामिवाकर्ण्य रामानुजपदोज्ज्वलाम् ।
जगदुत्तारणीं रङ्गी तं कविं बह्वमन्यत ॥ ६० ॥

ब्राह्मं रथं तमारोप्य सर्वे देशिकपुंगवाः ।
छत्रचामरतूर्याद्यैः साकं गृहमनीनयन् ॥ ६१ ॥

रामानुजपदोपेतां कृतिमन्तादिरूपिणीम् ।
प्रपन्नजनगायत्रीमाहुराचार्यशेखराः ॥ ६२ ॥

दिव्यसूरिततिहारनायको
योगिराडिव तदीयसन्नुतिः ।
तत्कृतद्रविडवाङ्मयावली-
मौलिभूषणमणिर्विराजते ॥ ६३ ॥

यतीन्द्रं यामुनाचार्यप्रथमाभीष्टसिद्धये ।
कूरेशदाशरथ्यार्यौ चोदयामासतुस्ततः ॥ ६४ ॥

अवाप्ताखिलविद्योऽयमखिलोज्जीवनोत्सुकः ।
ब्रह्मसूत्रव्याक्रियैककौतुकी यमिनां पतिः ॥ ६५ ॥

---

इति श्रीमद्रामानुजाचार्यविरचिते
श्रीरामानुजचम्पूप्रबन्धे
सप्तमः स्तवकः

---

॥ अथाष्टमः स्तवकः ॥

अनन्तरं श्रीमान् संयमीन्द्रचक्रवर्ती सर्वलोकनाथाय श्रीरङ्गदिव्यभवनवासिने रविमण्डलरत्नपीठरचिताधिष्ठानाय सुवर्णदिव्यमङ्गलविग्रहशालिने पुण्डरीकाक्षायापहतपाप्मत्वादिकल्याणगुण-

भूषाय किरीटमकुटकुण्डलहारकेयूरादिनानाभरणशोभिताय पुरुषोत्तमाय वरायापुंप्रभवतया नित्यनिर्दोषां तर्काङ्गसंगतिविशेषचारुतरवेषां शब्दानुशासनलावण्यधारिणीं मीमांसान्यायमौक्तिकमणिभूषणमनोहारिणीं सदर्थस्मृतिमतीं मङ्गलसूत्रधारणानुगुणस्थितिमतीं कृतकेतरभारतीकन्यां सकललोकमान्यां दातुकामो भगवद्बोधायनवाण्यगण्यवैभवपुण्यतीर्थोदकधारापूर्वकदाने विशिष्याभ्युदयो भविष्यतीत्यभिसन्धाय श्रीवत्सचिह्नसहायोऽह्नाय जाह्नवीतीरमधिष्ठाय विविधविद्वज्जननिरन्तरं काशीदेशाधिपतिसभाभ्यन्तरं प्रविश्य ग्रन्थपरिशोधनाय तत्प्रार्थनामिक्षुरसास्वादनाय वेतनं गृहीत्वा वर्तमानो बहोः कालान्निधिमिव बोधायनीयां तां वृत्तिमुपलभ्यालभ्यामिव जीवनौषधिं गाढं परिरभ्य दोर्भ्यां प्रतिनिवर्तमानो मृषावादिव्रातापहृतकोशोऽयं पाटच्चरापहृतकोश इव शोकाकूपारस्य परं पारं प्राप्तुमपारयन् सहजधीविभवसनाथेन कूरनाथेन पारेगङ्गं मध्येकवेरतनयं वा वृत्तिरियं मयोपन्यसनीयेति प्रतिज्ञाय लब्धाभ्यनुज्ञेन तावदखिलमुपन्यस्यता समारोपितधैर्यलक्ष्मीकः प्रमोदनिर्भरो निर्भरमभ्यविन्दत राजसभाभ्यन्तरम् ।

अतिमानुषमालोक्य वैदुष्यं गुरुशिष्ययोः ।
विस्मेरहृदयो राजा वृत्तिं तामदिशत्पुनः ॥ १ ॥

तदनु यतिकुलनाथः कूरकुलनाथसनाथो दूरीकृतप्रतिभटनिरोधो रोधोविहीनानन्दानुरोधो विरहासहिष्णुतयाऽनुव्रजन्त्या विष्णुपद्येव विजृम्भमाणया मृषामतविषावनीरुहषण्डखण्डनकृपाण्या कृतकेतरालापपयःपारावारपयोवेण्या भगवद्गुणरत्नभरण्या प्रत्यक्षरक्षरदमृतरसधोरण्या गैर्वाण्या वाण्या मनोहारिण्या व्याहरन्नर्चिरादिमार्गानुसारिण्या सरण्या मुक्त इव मुक्तशोको विरजयेव कवेरजया परिवीतं प्रत्यक्षमिव परमव्योम श्रीरङ्गधामाभ्याजगाम ।

न्यायशिलीमुखशरधिं दाशरथिं भक्तिवारिधिं योगी ।
आश्लिष्य सानुरागं मुमुदे संवीक्ष्य रङ्गभूमिनिधिम् ॥ २ ॥

श्रीमन्तं प्रतिपाद्यमाद्यमनघं रङ्गक्षमावल्लभं
वेदान्तं प्रतिपादकं च युगपत् त्रातुं यतिक्ष्माभृता ।
लब्धौ दाशरथिश्च कूरकुलराट् साहाय्यकाचार्यका-
वित्युन्मस्तकमुद्भमौ तनुभृतामानन्दपारम्परी ॥ ३ ॥

अनन्तरमेकं वत्सरं निर्मत्सरसमुत्सारितान्यव्यापारो भगवान् यतिसार्वभौमो विगतनिद्रः समुदितयोगमुद्रो वेदान्ततत्त्वचिन्तां विधाय श्रीकूरनाथलेखिनीनिकषदृषदुल्लेखेन परीक्षितैः सुवर्णैः सुघटितं कृतकेतरभारतीशिरोभूषणं दूरीकृतमृषावादिमुखनिखिल-दुर्वादिदूषणमन्वक्षरक्षरदमृतधारमतिगभीरं भगवद्बोधायनटङ्कद्रमिड-गुहदेवप्रमुखपूर्वाचार्योपदर्शितमुक्तिघण्टापथायमानविशिष्टाद्वैतसि-द्धान्तपद्धतिप्रतिष्ठापनधुरीणमखिलाज्ञानान्धकारनिराकरणपारीणम-दूष्यं शारीरकसूत्रभाष्यं प्रणिनाय ।

आनीय गङ्गामिव सूत्रवृत्तिं
गङ्गातटात् संयमिसार्वभौमः ।
दूनां मृषावादविषानलेन
व्यासोक्तिमुज्जीवयति स्म दीनाम् ॥ ४ ॥

प्रगृह्य गङ्गामिव सूत्रवृत्तिं
भगीरथप्रक्रियया यतीन्द्रः ।
कुदृष्टिदृष्ट्या व्रणदोषदुष्टां
पवित्रयामास स सूत्रमालाम् ॥ ५ ॥

अथ यतीन्द्रो विनयसान्द्रो विन्यस्य धुरि रङ्गधुरीणस्य भाष्य-मिदमतिगम्भीरया गिरा प्रपञ्चयन् देशिकसार्वभौमपरिषदमम्भोधर इवाम्बुधारया चातकमण्डलीमानन्दयत् । तेन रङ्गबन्धुना प्रेम-सिन्धुना प्रमोदामृतसरोविकस्वरसरोजसदृग्भ्यां दृग्भ्यां सबहुमानम-भिवीक्षितः सर्वजनश्लाघितः श्रीवैष्णवश्रियमभिवर्धयन्नेधयामास ।

श्रीलक्ष्मणार्ये जनरक्षणाय
शैवादिपक्षक्षपणप्रवृत्ते ।

भूचक्रमेतत्सकलं क्षणेन
श्रीवैष्णवैकार्णवतामवाप ॥ ६ ॥

श्रीपाञ्चजन्यध्वनिवत्तदानीं
कोलाहलः कश्चिदभूत् प्रजानाम् ।
द्राग्दारयामास स मानसानि
दुर्योधनादेरिव दुर्जनस्य ॥ ७ ॥

दिग्भ्यो यशः परिमलैर्मिलिता यतीन्द्र-
पादारविन्दमकरन्दभुजः कृतार्थाः ।
धीरा मधुव्रतवरा इव झंकियाभि-
र्गीर्भिस्तदीयविभवं प्रथयांबभूवुः ॥ ८ ॥

कञ्जदृष्टिकरुणासुरसिन्धोः
कच्छसीमनि कृताभ्युदयोऽयम् ।
कल्पयञ्जयति काङ्क्षितपूर्तिं
कल्पवृक्ष इव लक्ष्मणयोगी ॥ ९ ॥

आभिरूप्यमभिजातमावहन्
वैष्णवश्रिय इवैष योगिराट् ।
भागधेयमिव रूपधेयभृत्
प्राणिनां स्फुरति चक्षुषां पुरः ॥ १० ॥

शेषी च शेषश्च जनावनाय
रामानुजाख्यौ मनुजौ प्रजातौ ।
पार्थाय पूर्वश्चरमार्थदोऽभू-
दन्यस्त्वपार्थाय च तत्प्रदायी ॥ ११ ॥

श्रीमान् सुमित्रोदयलब्धकीर्तिः
शेषत्वभागूर्मिलयावरोधी ।
रामानुजो धर्मभृतां वरिष्ठो
रामानुषङ्गे विमुखो विचित्रम् ॥ १२ ॥

ज्योष्ठानुवृत्तिस्तु तथा पृथिव्यां
रुन्धेतरां यद्धुरि मेघनादम् ।

यः सर्वदा यामुनतीर्थसेवी
रामानुजस्तत्पर एव ताभ्याम् ॥ १३ ॥

भित्त्वा द्राक्छैवधर्मं सगुणमनुगुणं वैष्णवं धर्ममश्नन्
मायावादप्ररूढं खरमपि शतधा दूषणं खण्डयित्वा ।
तादृग्गोत्रोदयाढ्यो बहुसुखकलिविस्फूर्तिधिक्कारकारी
साक्षाद्रामो विचित्रं तदनुजयशसो भाजनं योभवीति ॥ १४ ॥

त्रयो रामानुजास्तेषां कवयोऽपि त्रयोऽभवन् ।
रामायणं भारतं ते सप्ततिं च व्यधुः क्रमात् ॥ १५ ॥

शिखामणिर्वेदविदां भविष्णुः
शिखामणिष्ठां कलयन् यतीन्द्रः ।
स ब्रह्मसूत्राकलनानुकूलं
सब्रह्मसूत्रः स्वयमाविरस्ति ॥ १६ ॥

भोगिराजयतिराजतोयदे
बाहुदण्डयुगली विराजते ।
प्राग्भवीयघनकायकाण्डधी-
संप्रदायघटनेद्धपाण्डिती ॥ १७ ॥

सत्त्वप्ररोहनिवहश्रियमावहन्ति
बाह्वादिदेशविनिवेशमनोहरोऽयम् ।
शुभ्रोर्ध्वपुण्ड्रविततिः शशिखण्डरूप्य-
रेखाद्युतिर्यतिपतेर्नयने धिनोति ॥ १८ ॥

आनाभिबिम्बपरिचुम्बि गलावलम्बि
राजीवबीजतुलसीमणिदामयुग्मम् ।
मालाद्वयस्य सुषमामुभयोर्विभूत्यो-
राविष्करोति हृदये यतिनायकस्य ॥ १९ ॥

नाथानुरागतरुपल्लवतल्लजाभं
काषायमंसकलितं ललितं यतीन्दोः ।
बालातपद्युतिकदम्बविडम्बि धत्ते
हार्दान्धकारनिकुरुम्बनिरासकेलिम् ॥ २० ॥

आटीकते कटितटे घटिता यतीन्दोः
शाटी प्रवालपरिहासपटीयसीयम् ।
पद्माटवी पदजिता मिलितेव भीत्या
भक्तानुरागलहरीपरिपाटिलीलाम् ॥ २१ ॥

दिव्यालापकलापकेकिपरिषत्केकारवाडम्बर-
स्मृत्यम्भोजवनीविहारिमधुलिड्झंकारशङ्काकरः ॥ २२ ॥

पाराशर्यवचोऽब्धिपूरविलसत्कल्लोलकोलाहल-
प्रायः संयमिभूभृदुक्तिनिकरः कर्णामृतं वर्षति ॥ २३ ॥

धीवल्लीपरिवीतशाखिपटलीशाखाशिखामण्डली-
राराजद्द्विजराजराजिसरसालापप्रियंभावुकः ।
संसृत्यातपतापपाटनपटुः श्रीलक्ष्मणाचार्यवा-
गारामः कमलासहायविहृतिस्थानं समुज्जृम्भते ॥ २३ ॥

आरामो यतिसार्वभौमकरुणाकल्लोलिनीकच्छभू-
रूढानेकविधागमोज्ज्वलतमो भाष्यादिकुल्याकृतिः ।
श्रुत्याकर्षिशुकादिसद्द्विजवरव्याहारसंभावितो
यत्र क्रीडति माधवः सुमनसामामोदमापादयन् ॥ २४ ॥

तर्कस्तम्भविजृम्भितं सुघटितं शब्देष्टकाभित्तिभि-
र्मीमांसावलभीवृतं सुरभितं वेदान्तसंतानकैः ।
स्मृत्युल्लोचविराजितं विरचितं सूत्रैः सुधाभिर्विभोः
क्रीडाहार्यमवैमि संयमिविभोः सर्वोन्नतं व्याहृतम् ॥ २५ ॥

श्रुत्याधारशिलाप्रतिष्ठितभुवं तर्कोपलोज्जृम्भितं
शब्दप्रस्तरपीठपर्वघटनश्लाघ्यं सदध्वोन्नतम् ॥ २६ ॥

मीमांसायततुङ्गशृङ्गरुचिरं योगीन्द्रगीर्गोपुरं
भात्येतन्मुखतः सुखेन भजतेऽयोध्यापुरीं देहभृत् ॥ २७ ॥

आम्नायाश्वलसौधपालिविलसन्माणिक्यदीपावलि-
स्मृत्यम्भोजवनीनवीननलिनीकान्तांशुपारम्परी ।
पाराशर्यवचोनिकायकलशाकूपाररत्नच्छटा
श्रीमत्प्रेमलतां प्रसूनपटलीमिध्याद् यतीन्दोः कृतिः ॥ २८ ॥

प्रणाली पद्माक्षप्रणयरसधारानुसरितो
मृणालीसंपत्तिः प्रगुणधिषणाम्भोजविततेः ।
प्रतोली विस्तीर्णा नरहयरथोच्छ्रायजननी
मधूलीधारेयं यतिपतिमुखाब्जस्य सरणिः ॥ २९ ॥

विश्वम्भराविवृतदुर्मतदुर्निवार-
दुर्वासनाक्षपणदक्षिणमब्जगन्धि ।
उत्तंसभूषणमिदं विबुधोत्तमानां
रामानुजाङ्घ्रियुगलं मम भातु मूर्ध्नि ॥ ३० ॥

त्रिवर्गोल्लङ्घनपटोरेकदण्डित्रयीजितः ।
विजयध्वजवद्भाति त्रिदण्डं योगिभूभृतः ॥ ३१ ॥

त्रियुगस्य बलाध्यक्षस्त्रिजगत्त्राणकौतुकी ।
त्रिगुणं वेत्रमादत्ते त्रिदण्डं लक्ष्मणाकृतिः ॥ ३२ ॥

श्रियः परिवृढं त्रयीशिखरभारतीनां गणो
यथैकमुखमीरयन् कलितनैकपक्षक्षतिः ।
सहस्रमुखभोगिराड् बहुमुखं स्वयं भाषते
समक्षमिति लक्षितो जयति लक्ष्मणाख्यो मुनिः ॥ ३३ ॥

आजानसिद्धशेषत्वं विविधं भोगियोगिनः ।
शाणोत्तेजनरीत्येदमधुना शोभते भृशम् ॥ ३४ ॥

अनादिवाणीशिखरामृताब्धि-
तरङ्गवेणीरमणीयधाटी ।
विभाति फाणितथफलायितार्था
मायाकृपाणी यतिराजवाणी ॥ ३५ ॥

अथ भगवान् रामानुजयोगी महामन्त्रप्रचारणधुरीणः समुचाटितकलितमःपिशाचाटोपो भूयस्तदुज्जृम्भणसंभावनागन्धदूरीकरणायेव दिशामण्डलं निजचरणाम्भोजरजोभिः पवित्रयितुं महत्या श्रीवैष्णवगोष्ठ्या परिवृतः प्रतस्थे ।

शिरसोरिव शैवमायिनोः
कलयन् पादुकयोः पदारविन्दे ।

गजराजगतिः पतिर्यतीनां
प्रययौ भूवलयप्रदक्षिणाय ॥ ३६ ॥

विभूतिद्वयसाम्राज्यकीर्तिस्तबकवैखरी ।
चकाशे काशसंकाशप्रकाशा चामरद्वयी ॥ ३७ ॥

श्वेतातपत्रं विपुलं सगोत्रं शीतरोचिषः ।
श्रीवैष्णवश्रियो वासपुण्डरीकमिवाबभौ ॥ ३८ ॥

जजृम्भे गम्भीरो जयपटहनादो यतिपते-
र्मृषालम्बस्तम्बेरमदमनकण्ठीरववरः ।
प्रशंसापद्यानां पठननिनदानां सहचरो
ध्वनीनां सच्छात्रः प्रमदवसतेश्छात्रविततेः ॥ ३९ ॥

दिग्भित्तिप्रतिनादमेदुरतरैश्छात्राट्टहासार्भटी-
प्राशस्त्यस्तवपाठघोषघटितालम्बाधिकोज्जृम्भिता ।
ढक्का दिक्करिकर्णघिक्कृतिचणैर्हिक्काकारैर्वादिनां
रोदोगर्भमपूरयद् ध्वनिभरैर्दिग्जैत्रयात्रासखैः ॥ ४० ॥

एवं श्रीरामानुजगुरुचक्रवर्ती क्रमेण स्वरक्षणविचक्षणैर्भगवत्कैङ्कर्यनिर्वाहलक्षणैः स्वीयनामकरवालधरैर्भगवद्भागवतकिङ्करैः परिवृतो निखिलतत्त्वार्थविशदीकरणचणनिजवचोगुम्भविकसितमतिभिर्यतिभिः सप्रश्रयमनुगम्यमानो विमतमतनिरासधुरन्धरैर्विबुधवरैरनुगतो माङ्गल्यसूचकविहगमृगविहितानुकूल्यपरितोषितान्तरङ्गस्तत्त्वत्रययोधनविधायित्रिदण्डकुलिशपरिमण्डितपाणिर्यतिवरवज्रपाणिः कुमतिगिरिपक्षतक्षणकृतक्षणः प्रथमं प्राचीं ककुभमभिगच्छंस्तत्र वावदूकान् कांश्चन कमलनयनचरणनलिनमिलिन्दायमानमानसान् विधायानेकदिव्यस्थलभगवत्सेवापुरःसरतत्तत्परिचारकनिकरसदाचारनियमनमाचरन् स्वाचार्यपञ्चकाचार्ययामुनाचार्यपदकमलभृङ्गायमाणमानसो रुचिरपटीरलिकुचमाकन्दकुरवककुरुविन्दमन्दारकोविदारपनसासनप्रमुखविटपिविटपललितशैलाञ्चलचलदूर्मिमिलितहरिपदनूपुरायमाणनूपुरापगासलिलतरङ्गशिशिरानिलपरिहृतभवपरितापभरितभवितापहरं वनमहीधरमासाद्य सुन्दरभुजचरणारविन्दसंदर्शनकन्दलितानन्दः श्रीरघुवरोर्वीजयसूचकपताकाय-

मानं निशाचरप्रवररावणशिरोभारनिवारणदिव्यौषधिभावविराजमानं भगवद्विमुखभीषणविनयभूषणशरणागतविभीषणराज्यलक्ष्मीहेतुं सेतुं दाशरथिगुणानुभावजनितहर्षपरम्परासूचकविकासयुग्भ्यां दृग्भ्यां संमान्य स्वचरणशरणवरणदृढीकरणायेव स्वयमपि वरुणाय शरणागतिमालम्बन्तं भगवन्तमासेव्य तत्रत्यविमतकुमतिदुर्मतिहतिं निजमतिविकासेन निर्निरोधं विधाय दक्षिणदिग्रमणीमणिरमणीयश्रवणकुण्डलं मध्यमण्डलं समेत्य तद्देशिकार्यसुधीजनान्निजधीप्रकाशनेन श्रीशपादारविन्दभक्तिमदग्रेसरान् विरचय्य वटदलशयनचरणकमलासक्तचित्तविष्णुचित्ततनयां विनयादानम्य तदीयभगवत्परिणयसामयिकशतघटपायसान्नसमर्पणप्रार्थनापरिपूरणेन तदग्रज इति मुख्यस्वाख्याविख्यातः तज्जनकभावभासितं मुनिं वटदलशयनं सुरमथनं च संसेव्य पाण्ड्यमहीमहिलामहनीयमहीधरवक्षोजमुक्ताहारसमर्पणनिपुणां ताम्रपर्णीमवगाह्य प्रपन्नजनमौलिभूषणं वकुलभूषणं प्रणम्य प्रणमनपरवाञ्छितवितरणसुरसालं तोतशैलमधिगम्य भक्तजनभद्रदायकदेवनायकपादपद्मप्रपदनप्रभवप्रमदभरमेदुरहृदयः परिणतचिरन्तनसुकृतप्रणतजनरक्षणसमुचितश्रीमत्कुरुंकुटीकृताधिवासान् निजतनुविहसितातसीकुसुमविकासान् कुन्देन्दुसुन्दरमन्दहासान् इन्दिरानिवासान् कृपारसपरिपूर्णान् पञ्च पूर्णान् प्रणम्य तेषु क्षीरकासारतीरवासिना केनचित् पूर्णेन बहुधाऽवतीर्णेनापि मया वशीकर्तुमशक्यान् वृजिनसमार्जनोर्जितौत्सुक्यान् विरुद्धस्वभावान् जीवान् कथमिव सत्पथप्रवृत्तान् कृतवानित्याक्षिप्तः श्रोतव्यरीत्या शृणोषि यदि वक्तव्यप्रकारेण वक्ष्यत इत्याचक्षाणस्तत्कालोचिताचरणचतुराय च तस्मै मन्त्ररत्नमुपदिश्य तदाचार्यभावमाविश्राणस्तद्वास्तव्यविबुधमृगयूथान् केसरीव निर्जित्य निजकटकनिराघाटपर्यटनपटुतरमदकरटिकराग्रकम्पितशिखासहस्रसमुद्भासमानसालतालस्पन्दनस्यन्दनचन्दनादि - विविधमहीरुहनिवहपरिष्कृतवप्रजालं पटीरशैलमधिरुह्य पश्चिमपयोनिधिमहीमीक्षमाणस्तत्तीरकृतसंनिवेशान् केरलदेशानतीत्य तत्र क्वचित्प्रदेशवर्तिना प्रमथगणचक्रवर्तिना प्रकटीकृतनिजकीर्ति-

स्फूर्तिना दक्षिणामूर्तिना वृषभाधिरूढेन परिजनपरिवृतेन प्रत्युद्गम्यमानस्तदभ्यर्थनया परिहसितगङ्गातुङ्गभङ्गुरभङ्गावलीभङ्गावहभङ्गिसंगतरुचिरतरवेण्या स्ववाण्या विशदीकृतवैदुष्यमदूष्यं श्रीभाष्यमुपन्यस्य परितुष्टेन तेन विरचिताम् 'अद्भुततरकल्याणगुणपरिपूर्ण निखिलजनसमुज्जीवनावतीर्णाश्चर्यचर्य परमाचार्य भगवद्रामानुजाचार्य भवत्प्रणीतश्रीभाष्यमहिम्ना स्वयंज्योतिः परं ब्रह्म शाणोत्तेजलज्वलद्घृणिमणिवदभिविद्योतते' इति बहुमतिमङ्गीकुर्वाणः श्रीकृष्णनामसंकीर्तनपरपौरजनवतीं द्वारवतीमेत्य तत्रत्यानखिलान् हितोपदेशेन कृतकृत्यान् विधाय मधुरापुरीश्रीवृन्दावनगोवर्धनप्रभृतिदिव्यदेशानासाद्य तत्र निजप्रभावातिशयं प्रकाशयन् निजयशःप्रकाशीकृतदशदिशावकाशः काशीमाससाद ।

जित्वा वादिपरम्परामनुपदं मोदं समातन्वता
दृष्ट्वाऽनेकविधान् जनान् जनपदानाश्चर्यमाविभ्रता ।
जन्माद्यस्य यतो बभूव जगतः स ज्ञानशक्त्यादिमान्
श्रीभर्तेत्यवगच्छता भगवता दृष्टा नदी वैष्णवी ॥ ४१ ॥

निजोक्तिपरिपाटिकाविजितधाटिकां जाह्नवीं
ह्रियं जगति बिभ्रतीमिव विलीयमानां पराम् ।
व्यगाहत कृतादरो यतिपुरन्दरो लालयन्
भुजाघटितसंगमो भुवनपावनः पावनीम् ॥ ४२ ॥

कपालिनो मौलिकपालमाला-
संसर्गदोषं व्यपनेतुकामः ।
रामानुजो मज्जनलालनीया
स्यादित्यमज्जत् किमु विष्णुपद्याम् ॥ ४३ ॥

चिक्रीड सख्यां मम सौख्यशाली
कालं महान्तं मयि विष्णुपद्याम् ।
कौतूहलं नातनुतेति खेदं
रामानुजोऽसावधुनोदिदानीम् ॥ ४४ ॥

आदौ विष्णुपदी बभूव जगतामुत्तारणे पावनी
मौलौ माल्यमिवार्पिता पशुपतेर्निर्माल्यवद्दूषिता ।
श्रीरामानुजपादपङ्कजरजःपारंम्परीभूषिता
सर्वेषामपि गाहनानुगुणतामाटीकते स्माधुना ॥ ४५ ॥

इति विविधवर्णनापटीयांसो विद्वांसो निकटे निषेदिवांसो यतिकुलनेतुश्चिरमपारमानन्दमनुबभूवुः ।

अथ भगवान् रामानुजमुनिर्दिनकर इव किरणकलापैरन्धकारप्राग्भारमम्भोधर इव दावपावकज्वालाजालमम्भोभिर्वाग्गुम्भैर्विरचितसम्यङ्न्यायपरिरम्भैराविष्कृतजीवजीवनारम्भैः संरम्भैः कथाहवजुषां मृषामतविदुषां दुराग्रहं निःशेषं निरस्यापि श्रीभाष्यरत्नस्य शारदापीठशाणोल्लेखनेन कमपि प्रकाशमापादयन् बहुलं कुतूहलं बिभरांबभूव ।

तदनु तद्देशकृतावासा कुन्देन्दुसुन्दरकन्दलन्मन्दहासा नानारत्नभासुरभूषासहस्रसमुद्भासमाना असमाना तरुणशुकमुपलालयन्ती समधिकप्रेमवती भारती रणन्मणिकङ्कणं झटिति कवाटं विघटय्य बहिरभ्येत्यातिपरुषकलिपुरुषनिरीक्षणकलुषितमानवेक्षणाप्यायनशुभरूप निराकृतकुमतिघनाटोप श्रीरामानुजयतिसार्वभौम कप्यासवाचः साध्वर्थविवेचनेन मामानन्दयेति प्रार्थयामास ।

अनन्तरं रामानुजसुधीमणिरपि गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणं प्रतिपादयति कप्यासवागितीममर्थं तस्यै निवेदयंस्तया शंकरदुरर्थनिशमनावदीर्णयोर्मम कर्णयोरलंकाराभिमतार्थसुधासेचनेन सुखं जनयसीति श्लाघितस्तत्रैव कानिचिदहान्यतिवाहयांचक्रे ।

अथ निजयशःप्रकाशीकृतदशदिशाततिः काशीदेशाधिपतिरदसीयवैभवविलोकनेन विजृम्भितविस्मयातिरेकविवशीकृतमतिः स्वभाग्यराशेः परिणामवशादेनं मुनिमूर्धन्यं धन्याग्रणीर्बहुधा पुरश्चकार, तिरश्चकार चान्यान् ।

निधाय भाष्ययुगलं शारदापीठसीमनि ।
घटयित्वा स्वयं राज्ञा मुद्रया श्वो विघाटिते ॥ ४६ ॥

शारदा शांकरं भाष्यमधःकृत्य विशारदा ।
रामानुजमुनेर्भाष्यं बभौ मूर्धनि बिभ्रती ॥ ४७ ॥

विलोकमानास्तामेनां जनाः सर्वेऽपि मेनिरे ।
रामानुजमतं सर्वमताधिकमिति स्फुटम् ॥ ४८ ॥

अथ भगवती भारती सदसद्विवेचनचतुरा चतुराननवदनराजीववनविहारराजहंसीवैखरीमाविभ्रती तत्करतलकलिताच्छस्फटिकमणिमालारामणीयकमावहन्ती प्रसन्नहृदया विस्मयोत्फुल्लनेत्रं रोमाञ्चकञ्चुकितगात्रं स्मितज्योत्स्नानिर्भरवदनचन्द्रं शमधनेन्द्रमभिमुखीकृत्य निरवग्रहमनुग्रहकिरं गिरमित्थं व्याजहार—

श्रीभाष्यमिति भावत्कं भाष्यं जोघुष्यतां गुरो ।
श्रीभाष्यकार इति च प्रथा ते प्रथतां भुवि ॥ ४९ ॥

तदनु काशीराजबहुमतो भारतीशिरःश्लाघनविभाविताखिलमताभ्यधिकभावनिरुपममतोऽयं संयमिसार्वभौमो भागीरथीतीरपथेन यथामनोरथं सपरिवारः संचरमाणोऽगण्यपुण्यकलस्तोमपरिणामस्मेरक्षेत्राणि दिव्यक्षेत्राणि निजावेक्षणपात्रीकरणेन भूयः पवित्रीकुर्वाणः स्वानुसरणपरानेकतत्तद्देशधरित्रीगीर्वाणस्तदनुगुणमित्थमुपश्लोकयामास—

विश्वं त्रातुं विष्णुपद्यां निमज्जन्
रामाभिख्यां ख्यापयन् मार्गदर्शी ।
यामध्यास्ते विश्वनाथः प्रकाशी
काशी सैषा सर्वदा चाकशीति ॥ ५० ॥

तत्तद्घट्टस्थविद्वत्परिवृढपरिषत्पाठनप्रक्रियोद्यद्वाग्धाटीप्राभवात्तप्रकटपरिभवा खाटलोकस्रवन्ती ।
गर्भान्तर्लोकधात्र्या बहुलमुदितया व्रीडया लीयमाना
वेगादाढौकतेऽसौ जलनिधिजठरं गूढमित्युन्नयामि ॥ ५१ ॥

गङ्गा माधवपादपङ्कजगलन्मारन्दधारासखी
गौरीवल्लभमौलिवेल्लितमहामल्लीसराकारिणी ।

प्राप्ता भाति भगीरथार्जितयशःपारम्परीवैखरी
स्वर्गारोहणपुण्यरज्जुपटली मज्जज्जनानामियम् ॥ ५२ ॥

पारेगङ्गमकृष्टपच्यमतुलं काश्मीरखण्डं घनं
किंचिद्भारतखण्डमण्डनमिदं बोधास्पदं चक्षुषाम् ।
लक्ष्मीकान्तकृपाकटाक्षणमिवाक्षीणं जगद्रक्षण-
क्षेमाय क्षमते सदातनफलाविर्भावसंभावितम् ॥ ५३ ॥

गयेयं केदारः सुकृतकलमानां विजयते
वटच्छाया पापातपशमनशीला विलसति ।
पदं विष्णोरेतत् स्फुरति पितृसंतर्पणपदं
समष्टिर्धर्माणामिह मिलति दिष्ट्या तनुभृताम् ॥ ५४ ॥

अयोध्येयं धन्या दिनकरकुलीनक्षितिभृतां
प्रथाभिः सौगन्ध्यं पृथुलमधुनापि प्रथयति ।
सरय्वाः पारेऽसौ मखसदगजालानपटली-
दृढेयं यूपाली द्रढयति दृशोः कौतुकभरम् ॥ ५५ ॥

अलभ्यं सौलभ्यं प्रथयितुमतीव क्षितितले
जगत् त्रातुं नारायण इह चतुर्धा समुदितः ।
कृपाविष्टो भ्रातृत्रितयसहितो भूमितनया-
समेतः श्रीरामो दशरथतनूजो विजयते ॥ ५६ ॥

अनन्तरं पाषण्डतरुषण्डखण्डनचण्डवेतण्डपरिवृढप्रौढिमाढौकमानो भुवनावनकृतावतरणदत्तात्रेयसमानो विमतजनविमथनसमेधमानमेधातिशयविद्योतमानो यतीशानो नरनारायणचरणनलिनध्वजकलशवज्राङ्कुशप्रमुखरेखाविचित्रितविविधमहीरुहमूलभूतलोपलक्षितोपवनशताभिरामं मन्दस्पन्दनचन्दनगिरिपवनपरिहृतपथिकश्रमं बदरिकाश्रममश्रमेणाधिगम्य तत्रत्यमष्टाक्षरीनिष्ठागरिष्ठं मुनिगणमभिप्रणम्य कनदुपलगण्डभागमण्डलमण्डनायमानचण्डभानुमण्डलैककुण्डलालंकृतं नितम्बविडम्बमानकादम्बिनीनीलाम्बरं मदभरितमधुकरनिकरझङ्कारमनोहरवनमालिकोपेततया संकर्षणमूर्तिमिव परि-

हसन्तं हिमवन्तमुपेत्य तदुपत्यकानिवासिनः स्वान्तेवासिनः संविधाय विकटतरकटकवप्रलीलालम्पटवनकरटिघटाविषाणोल्लिखिततदीयशिखरे लिखितनिजविजयपद्याक्षरनिगुम्भं जयस्तम्भं प्रतिष्ठाप्य सालग्रामशिलाचलं प्रदक्षिणीकृत्य बहुलतरतरङ्गपरम्पराविराजमानगण्डकीमवगाह्य श्रीपुरुषोत्तमं प्रतिष्ठाप्य नतजनाभीष्टदायकं श्रीजगन्नाथमासेव्य श्रीरङ्ग इव तदीयदिव्यदेशव्यवस्थां विधातुकामः स्वैरलीलापरवशनिजाशयवता भगवता क्षणमात्रेण श्रीकूर्मं नीयमानस्तत्क्षणं विबुध्य परिजनाननवेक्षमाणः किमेतदिति चिन्तयमानः श्रीमङ्गुगणसनाथं श्रीकूर्मनाथं निषेव्य श्रीश्वेतकुण्डस्थितश्रीमत्सितमृत्स्नाप्रकाशकेन तेन तत्तीर्थावगाहनपुरःसरमनुष्ठानाय नियमितस्तदाज्ञाप्रकारेणानुष्ठानं विधाय तद्वास्तव्यं भव्यनिजदुर्मतिविलसितप्रतिपदकलितविपुलापभाषणं संततसंतन्यमानानन्तमतदूषणमतिभीषणं प्रतिकथकजनं झञ्झानिल इव तूलजालं दूरतः समुच्चाट्यं स्तद्देशाधीशं सपरिवारं निजान्तेवासिनमाकलय्य श्रीकूर्मनाथं परितः प्रतिष्ठापितरौद्रविग्रहानपारपारावारमध्ये विनिपात्य सुखेन वर्तमानो जगन्नाथप्रेषितस्वान्तेवासिजनसहितस्तस्माद्देशात् प्रतिष्ठमानः सिंहाचलश्रीकाकुलैकशिलानगराहोबिलादिदिव्यदेशानासाद्य तत्रत्यप्रतिवादिमुखकमलानि तुहिनभानुरिव मुकुलीकृतान्यातन्वानो दुरितपटलविघटनपटुतरवेंकटाचलकटकतटीमाटीकमानः श्रीशैलपूर्णप्रमुखसुमुखनिखिलसंख्यावदभिगम्यमानस्तदुपदर्शितश्रीनिवासचरणनलिननिधानः क्रीडाविधृतजटामुकुटनागाभरणश्रीवेंकटेशनिरीक्षणक्षणसंधुक्षितभवभावान् भवान्धतमससंमोहितभावान् शैवान्निजप्रभावेणाभिभवितुकामो मध्यस्थरीत्या शङ्खचक्रादिकं शूलादिकं च तत्र निधाय यदयं भरिष्यति तच्चिह्नित एव देव इति निश्चित्य मुद्रामुद्रितकवाटं विघट्य्य शङ्खपाणिं भगवन्तं नत्वा कालहस्तिपरिसरे जयस्तम्भं प्रतिष्ठाप्य प्रमोदमानमानसो घटिकाचलनृहरिं प्रणम्य काञ्चीनगरमुपगम्य काञ्चीपूर्णपुरुषकारेण देवराजं भजमानस्तन्निकटवर्तिक्षेत्राण्यासेवमानो महाभूतपुरीमेत्य संसेवितकेशवपदकमलो निषेवितश्रीमत्कैरविणीविहाररसिकप्रसादपरपार्थ-

प्रियो दिग्वधूक्षौमीभूतनिजकीर्तिस्फूर्तिः श्रीरङ्गराजधानीं प्रसाधयांचक्रे ।

आचक्रवालमवनीवलयं विजित्य
दिङ्मण्डलीं निजयशोविसरैर्विभूष्य ।
तत्तत्स्थलस्थभगवद्भजनव्यवस्था-
माज्ञाप्य लक्ष्मणमुनिर्नितरां व्यलासीत् ॥ ५७ ॥

तदनु स कूरराट् सततवर्षिणि वारिधरे
विरचितमज्जनः शुचिरतीव सयोषिदसौ ।
अनशन उञ्छवृत्त्यनुपलब्धिवशाच्छयनं
व्यभजत जायया सह लसन्निजसन्महिमा ॥ ५८ ॥

तदानीं कूरगुरुरमण्यां श्रीरङ्गाधिपगुडान्ननिवेदनावसरसूचकघण्टारवं निशम्य त्वद्भक्तेऽस्मिन्नुपवसति कथमुपभोक्ष्यसीत्याक्षेपगिरमुद्भावयन्त्यां तामाकर्णितवता भगवता श्रीरङ्गरमणेन 'उपवसति कूरनाथः, गुडान्नं सकलवाद्यघोषपुरःसरं शिरसा वहंस्तस्मै प्रदेहि' इत्याक्षिप्तः स्वयमुत्तमपूर्णो गुडान्नपूर्णसुवर्णभाजनं मूर्ध्नो संविभ्राणस्तमनुबोध्य तस्मै समर्पितवान् ।

अनन्तरं गुरुर्भगवत्कटाक्षलब्धदिव्यान्नं सप्रणामं करेण गृहीत्वा सावशेषं तदुत्तमपूर्णहस्ते प्रदाय स्वयमुपभुज्य जायायै द्विधा प्रदाय तामभिवीक्ष्य किमेवं भवती प्रार्थितवतीति सक्रोधमाचक्षाणस्तया तथैवेत्यभिहितः कल्पविटपिनिकटमभ्येत्य तृणयाचनामिव महाफलप्रदं तमल्पफलं याचितवती भवतीत्यभिधाय तां सुखं सुष्वाप ।

अनन्तरं च,

यमलतनयौ जातौ तस्यां प्रसादमहत्त्वतो
निजकरतले गोविन्दस्तौ वहन् द्वयरक्षया ।
यतिनृपतये प्रीत्या प्रादर्शयद्द्वयसौरभा-
द्वदददनयोर्नाम व्यासः पराशर इत्यसौ ॥ ५९ ॥

एवं यामुनसंयमीन्द्रमहिताभीष्टद्वयीपूरणं
कृत्वापूरयदेष लक्ष्मणमुनिर्वाञ्छां तृतीयामपि ।
गोविन्दावरजस्य कश्चन सुतः प्रादुर्बभूवास्य च
प्रीत्या नाम पराङ्कुशोऽयमिति विख्यातं विधायाञ्जसा ॥ ६० ॥

इति श्रीरामानुजाचार्यविरचिते
श्रीरामानुजचम्पूप्रबन्धेऽष्टमः स्तबकः ॥

---

॥ अथ नवमः स्तबकः ॥

तत्ताद्दक्षदुरुक्तिलम्पटसुधावाचाटकौतस्कुत-
व्राताटोपमहाट्टहासपटलीपाटच्चरप्रौढिभिः ।
वाग्गुम्भैर्निगमान्तभावविशदीकारप्रियम्भावुकै-
रानन्दं रचयन् समस्तविदुषां रङ्गे यतीन्द्रो बभौ ॥ १ ॥

नैजाख्यासिधरैः प्रपन्नजनताभृत्यैः सहस्रैर्बहु
ख्यातैर्द्वादशभिश्च सप्तशतसंख्यातैर्यतीनां वरैः ।
श्रीमद्वैष्णवमुख्यसद्बुधजनैर्मान्यैरनेकैश्चतुः-
सप्तत्यार्यवरैर्वृतो यतिपती रङ्गे चकाशे भृशम् ॥ २ ॥

तदानीमेव,

कश्चिच्चोलपतिर्मुधा खलमतिर्भिक्षौ सुराजंभवं
मन्वानः कुमतिव्रजैरनुवृतो गोविन्दसंदूषकः ।
त्रय्यन्तेषु शिवात्परं हि परमं नास्तीति लेखाकृते
सर्वानानयति स्म विद्वदधिपान् कुण्ठीभवत्स्वोद्यमः ॥ ३ ॥

आगता विबुधास्तत्र तस्य मौर्ख्यानुसारिणः ।
तदभीष्टं तदा चक्रुः सफलं तद्भयाश्रिताः ॥ ४ ॥

चातुर्ग्रामी विपश्चिच्छठरिपुफणितिप्रक्रियान्यक्क्रियाकृत्
पाषण्डं तं नरेन्द्रं प्रमुषितधिषणं प्रावदद्भ्रान्तचित्तम् ।

श्रीमद्भाष्यप्रवक्ता बुधजनमहितो लक्ष्मणाचार्ययोगी
लेख्यां छन्दोऽनुरोधात्तव यदि विलिखेत्कार्यसिद्धिर्दृढेति ॥ ४॥

श्रुत्वा चोलाधिपोऽसौ शठमतिवचनं धीविहीनस्तदानी-
मानेतुं लक्ष्मणार्यं झटिति भटगणान् प्रेषयामास रोषात् ।
प्राप्यावर्तन्त तेऽमी यतिनृपतिमठोपान्तभूमिं प्रवेगा-
दाज्ञां राज्ञो वहन्तो गुरुतिलकममुं सत्वरं नेतुकामाः ॥ ५ ॥

तदानीं खलु निखिलकुमतिनिकरनिरसननिपुणनिरतिशयनिरवद्यनिजविद्यातिशयो निरन्तरनिरुपमसज्जनावनकृतावतारलक्ष्मणगुरुचरणरक्षणकृतक्षणनिजाशयो निगमान्तनितान्तसंचिन्तनसंतोषितसंश्रितस्वान्तः सदसद्विवेचनचतुरनिजमानसनिवासिश्रीकान्तः कनदनघगुणगणसनाथः कूरनाथश्चोलवसुन्धराधुरंधरसमुद्भटभटसमागमसमयसमुदितयतिपतिसमानयनवचनसमाकर्णनजनितसमुद्वेगस्तत्कालोचिताचरणसमुल्लसद्वेगो माध्यंदिनस्नानमाचरन्तं यतिवरं तमासेव्य तद्वृत्तान्तमावेद्य 'भगवन् कलिकल्मषमलीमसमानससांसारिकसमुत्तारणकृते मदीयधवलवसनधारणतिरोहितनिजाश्रमानुगुणवेषः परिकलितमादृशविनतजनाभिलषितविशेषपरिपोषः कुत्रचिदतिगूढतया तत्रभवता भवता स्थातव्यम् । अनेन तावकीनदासेन मया भवदीयकाषायवसनभरणनिगूढनिजगार्हस्थ्यं राजभटमतानुसारेण गम्यते' इति सविनयं विनिवेद्य स्वाभिमतपरिपूरणपरे गुरुवरे स्वमनोविसृत्वरसत्त्वगुणप्रभानिभविशदवसनधरे क्वचन गमनकृतादरे तदीयपादकमलजनितस्वानुरागरुचिनिचयसमानारुणांशुकपरिवीतनिजगात्रः स्वान्तेवासिलक्ष्मणमुनिपरिरक्षणविचक्षणस्वकीयपरिरक्षणोचितकृपापूर्णमहापूर्णपरिष्कृतपुरोभागो भूपतिभृत्यानुमत्या चोलनगरीमभिप्रतस्थे ।

ततः समागतममुं मन्वानो यतिभूपतिम् ।
पत्रिकालेखनं कर्तुमन्वशात् स महीपतिः ॥ ६ ॥

अनन्तरमसावनुपममहिमा हिमाचल इव समधिकधैर्यगरिमा महत्तरमदभरितकुमतिमतनिरसननिपुणनिजवचनपटिमा मनीषिजनसमीडितमहितनिजगम्भीरिमा महीसुरसुत्रामा 'शिवात्परतरं नास्ति' इति विलेखनावसरे 'द्रोणमस्ति ततः परम्' इति लेखनाकलनातिरुष्टनरपतिनिर्दिष्टनिजनयनसमुत्पाटनवचननिशमनक्षण एव 'दुर्जननिरीक्षणक्षमं ममाक्षियुगलं मयैव शिक्ष्यते' इति तमाचक्षाणः स्वागमनसमयसमानीताभ्यां कर्पूरपूर्णजम्बीररसाभ्यां स्वयमेव स्वविलोचनविलयमकरोत्। तदनु महापूर्णोऽपि महाहंकृतिसहितमहीपतिकारिताक्षियुगलोत्पाटनजनितव्यथापूर्णस्तत्क्षण एव 'एतादृशविपत्तिनिदानभूतः श्रीरामानुजयोगिवरमहिमासहनापचाराचरणशीलश्चातुर्ग्रामवास्यपि मदुपात्तामिमां महनीयां सम्पदमभिविन्दताम्' इति प्रार्थयन् प्राविन्दत परमां गतिम्।

श्रीमान् कूरान्वयाम्भोनिधिहिमकिरणो लक्ष्मणाचार्यरक्षां
कृत्वा श्रीरङ्गमेत्याखिलविबुधविनतो ज्ञानदृष्ट्या समेतः।
स्वाचार्यक्षेमवार्ताश्रवणकुतुकवानास्त विस्तारिकीर्तिः
श्रीमत्तत्पादपाथोरुहयुगलमसौ नन्तुकामस्तदानीम् ॥ ७ ॥

अनन्तरं श्रीरामानुजयतिरमणः स्वाचार्यचरणोदन्तविविदिषाविचाराक्रान्तस्वान्तः कूरान्वयाकूपारताराकान्तसंप्रेषितस्वान्तेवासिमुखावगतस्वमतविहतिकुपितचोलमहीपतिकारितनयनापलयनव्यथापूर्णमहापूर्णभगवत्पदभजनवृत्तान्तः स्वाचार्यचरणद्रोहाचरणनिपुणचोलक्षोणीरमणविलयमाकाङ्क्षमाणः क्षणमवतस्थे।

अत्याक्षीत् कूरनाथो मदवनविषये मांसचक्षुः स्वकीयं
तादृक्पद्माक्षसाक्षात्करणपटुतरज्ञानदृष्ट्या समेतः।
हा हन्तात्यन्तदुष्टक्षितिपविरचितस्वाक्षिविक्षोभकृत्य-
स्तत्याजाङ्गं मदर्थं मम गुरुतिलकः स्वं महापूर्णनामा ॥ ८ ॥

प्रातः सन्ध्यामुपास्य प्रकटितमहिमा लक्ष्मणाचार्यसूरिः
स्मृत्वा वार्तां सुघोरां प्रतिपदमुदयत्क्रोधशोणायताक्षः।

दैत्यः कृम्यात्तकण्ठो व्रजतु लयमयं चोल इत्यर्घ्यदानं
कृत्वा कृत्यं व्यतानीन्निजगुरुतिलकायाञ्जसा पारलौक्यम् ॥ ९ ॥

श्रीमान्रामानुजार्यः सितवसनधरः कूरनेतुः प्रतीचीं
यातः काषायधारी स उपगत इह श्रीमहापूर्णयुक्तः ।
चातुर्ग्रास्युक्तवाक्यं हितमिति समाकर्ण्य चोलक्षितीन्द्र-
स्तूर्णं भृत्यान्ग्रहीतुं तमतिजवयुतान् प्रेषयामास रोषात् ॥ १० ॥

क्रूराः कूरंचरिलचोलनृपतेर्भृत्याः प्रतीचीं दिशं
संप्राप्ताः सरयं यतीन्द्रहरणव्यग्रास्तदानीमसौ ।
गाथां हेतिवरस्य कामपि जपन् धूलीं प्रतिप्राक्षिपत्
प्राप्तास्ते सहसा ततो गतिहतिं सोऽयं ययादत्ययात् ॥ ११ ॥

यतिक्ष्माभृद्भीत्या नरपतिभटस्तोमकृतया
मधूलीवह्न्युर्वीधरकटकमभ्येत्य निभृतम् ।
समापृच्छत्सन्ध्यानियमविधये साधुचरितं
निषादं तत्रत्यं सलिलममलं व्याकुलमनाः ॥ १२ ॥

ततः सविनयं तस्य तटाकं सोऽभ्यदर्शयत् ।
तत्र हृष्टो यतिवरः स्नातः संध्याविधिं व्यधात् ॥ १३ ॥

कस्य त्वं शिष्यतामेत्य धन्यतामभिविन्दसि ।
इति पृष्टः स्वमाचष्ट नल्लानाख्यार्यसंश्रयम् ॥ १४ ॥

भक्त्या तेन समर्पितेन शुचिना वन्येन संतोषितः
कान्तारान्तरसीम्नि सत्करुणया नल्लान्नवाम्भोधरः ।
अद्यास्माकमभीष्टवृष्टिमतनोदित्याश्रितान् लालयं-
स्तत्रावासरतोऽभवद्यतिपतिः कूरेशचिन्ताकुलः ॥ १५ ॥

अनन्तरं नितान्तसंतोषितान्तःकरणा विरचितलक्ष्मणमुनि-चरणशरणवरणा विगतविषादा निषादास्तस्मै समीपवर्तिनि ग्रामे महीसुरभवनं व्यजिज्ञपन् ।

ततः प्रातः स्नातः श्रितजनसमेतो यतिपतिः
प्रयातः पाश्चात्यां दिशमभि निजाङ्घ्रिद्वयरताम् ।
सतां सेवासक्तां विनयविनतां साधुचरितां
समासाद्य प्रीत्या वसतिमकरोत्तद्गृहभुवि ॥ १६ ॥

तदनु,

भक्त्या संयमिपुंगवस्य सपरीवारस्य पूजाकृते
भव्यं भोज्यपदार्थजातमुचितं प्रीत्यार्पयित्वा तथा ।
स्वामिन्नद्य मदीयजन्म लभतां साफल्यमित्यर्थितः
प्राहैनां भगवन्निवेदनविधिर्भूयात् कथं वेत्त्यसौ ॥ १७ ॥

एवं सा साध्वी श्रीरामानुजमुनिमूर्धन्यवाणीमाकर्ण्य प्रत्यभाणीत्—

साध्वाराधनसाधनं मम परं दैवं गृहे संततं
सांनिध्यं कुरुते तदर्चनविधिं कृत्वाऽधुना भुज्यताम् ।
इत्युक्तस्तदवेक्ष्य नैजपदयोः संयोज्य पादूद्वयं
सोऽयं तत्र समस्तभक्तनिकरान्भोक्तुं समाज्ञापयत् ॥ १८ ॥

अथ सेयं भुक्तवत्सु भागवतेषु निजगृहोपरितले निद्रामातन्वानं निजपतिं विबोध्यान्तरानीय भुज्यतां भोज्यजातं भागवतशेषतयाऽतिपावनमितीरयन्ती निजरमणेन भवत्या च भोक्तव्यमिति संप्रार्थ्यमाना 'भवता पुनः सद्गतिविचारणविहीनेनातिनिद्रितेन किमपि न ज्ञायते । संप्रति हि श्रीरामानुजयोगिपुङ्गवः साकमनेकैर्देशिकैरस्मद्गृहमभ्येत्य भोक्तुं संशय्य बहुविधां परीक्षामातन्वानोऽस्मद्गृहाराधनविचारणेन मां स्वपदकमलसंश्रयवतीं विज्ञाय भोक्तुमभ्यनुज्ञां कृतवान् । अतोऽद्यैव त्वं तदन्तेवासी भवसि चेदुपभोक्ष्ये' इति स्वकीयरमणीवचनाङ्गीकारेण तस्मिन् भुक्तवति स्वयमुपभुज्य प्रातः सपरिवाराय गुरुवरायात्मीयपतिचरितं निवेद्य तमुज्जीवय त्वदीयपदसमाश्रयणेनेति विज्ञाप्य स्वभर्तारं यतिपतिपदसेवया धन्यं कारयति स्म ।

शङ्खचक्रपरिचिह्नितबाहा-
भासमाननिजशिष्यसमेतः ।
देशिकैः सह यतिक्षितिनेता
तत्र पञ्चषदिनानि निनाय ॥ १९ ॥

शेषावतारविख्यातः काषायवसनोज्वलः ।
भूषाभूतत्रिदण्डाढ्यस्तोषावहगुणो बभौ ॥ २० ॥

अनन्तरमयं यतिक्षितिपतिः स्ववाचां भरै-
र्विजित्य विविधान् बुधान् सपदि घट्टभूमिस्थितान् ।
स्वकीययशसा दिशो धवलिता व्यधान्मन्दर-
क्ष्माधरविघूर्णितामृतपयोधिवीचित्विषा ॥ २१ ॥

प्रतीपविबुधद्विपोन्मथनकेलिकण्ठीरवः
स्वभक्तपुरमास्थितो महितभक्तिपूर्णानतः ।
तदीशतनयाश्रितप्रबलरक्षसो मोचनं
विधाय महितो बभौ निजपदाब्जतीर्थान्वयात् ॥ २२ ॥

रामानुजयतीशः स्वं महिमानं मुहुर्मुहुः ।
विचिन्त्य मुदितायास्मै शङ्खचक्राङ्कनं व्यधात् ॥ २३ ॥

तदनु प्राचीनवचनविवेचनानिपुणमतिविततिविहतधर्मजात-माध्यमिकसौत्रान्तिकवैशेषिकवैभाषिकादिविमतकथकाखर्वगर्वसर्व-स्वनिर्वापणचणमतिविलसितोऽसौ वादाहवसमागतान् विमताने-तान् परिकलितशून्यवादान् निर्जरसरिदन्तरनिरन्तरविजृम्भमाण-तरङ्गपरम्परापरिहसनधुरीणधोरण्या प्रतिकथकविच्छेदनकृपाण्या स्व-वाण्या विनिहतमोदान् निरचय्य प्रतिक्षिप्तप्रतिपक्षपक्षः संरक्षिता-त्मनीनपक्षः श्रितजनवृजिनसमुन्मूलनपवित्रः साधुजनविस्मयनीय-स्वभावातिशयेन नरपतिहृदयमानन्दयन् प्रचकाशे ।

विट्ठलरायप्रभुरपि माहात्म्यं तस्य तादृशं वीक्ष्य ।
तत्पादपद्मयुगलीसेवासंसक्तमानसः समभूत् ॥ २४ ॥

एवं क्रमेण प्रतीचीं दिशं प्रतिष्ठमानो यतीशानोऽबद्धसिद्धान्तबद्धान्तःकरणान् अखिलप्रपञ्चवञ्चनैकनिपुणान् वैष्णवमुखावलोकनमात्रासहिष्णूनपि कतिचन परमनास्तिकांस्तत्रत्यजलाहरणतीर्थे दाशरथिपदकमलविन्यासेन समुदयन्मतिविकासमान्यांस्तान् समस्तानपि मुकुन्दभक्तमूर्धन्यान् विरचय्य स्वकीयपदपङ्कजभृङ्गायमाणनीरन्ध्रभक्तिपूर्णजनाभ्यर्थितं समुज्जीविततीर्थजातं श्रीपादतीर्थं तत्रैव सालग्रामे प्रतिष्ठाप्य परिकलितसकलजनसमुज्जीवनो नरमृगेन्द्रालयमभ्यविन्दत। अनन्तरं रामानुजसंयमिसार्वभौमो दाशरथिप्रमुखदेशिकसमेतो विठ्ठलरायमहीपतिप्रतिपदसंसेवितो नृसिंहालयमधिवसन् श्वेतमृद्लाभेन चिन्ताकुलितस्वान्तः श्रीमता यदुमहीधरधुरंधरेण स्वप्नसंविहितसांनिध्येन भगवता 'यदुक्षितिधरे दक्षिणपश्चिमहरिदन्तरभुवि तुलसीवृक्षमूलवल्मीकप्रदेशे श्रीनारायणाख्यः कल्याणतटिनीतटमधिवासामि। तत्खनने मदाज्ञया श्वेतद्वीपाद्वैनतेयानीता श्रीमत्सितमृत्तिका लभ्यते। मया तुलसीदलचिह्नितेन च पथा स च देशः प्रत्यभिज्ञाप्यते। तत्र कृतवसतिं मां त्वदीयान्तेवासिनरपतिमुखेन गोपुरमण्डपप्राकारादिपरिशोधनपुरःसरं प्रकाश्य यथापूर्वमाराधय' इत्याज्ञप्तस्तत्क्षणं प्रबुध्यमानः किमाज्ञप्तं भगवतेति मोदमानः स्वप्नवचनं प्रभवे निवेद्य तत्प्रदर्शितमार्गेण तुलसीवृक्षमूलवल्मीकमुपेत्य भगवन्नियमनरीत्या तत्परिशोधनं विदधानो वल्मीकोपरि नीलमणिसंनिभां किरीटकोटिमभिवीक्ष्य नरपतिसमानीतक्षीरसहस्रघटाभिषेकेण प्रकाश्यमानं कोटिकन्दर्पसुन्दरमूर्तिं परिहृतप्रणतजनार्तिं भक्तानमुञ्चन्तं भगवन्तमनुभूय हर्षप्रकर्षप्रवृद्धनयनपुण्डरीकोऽयं पण्डितपुण्डरीको द्विपञ्चाशन्नामघटितान् भगवत्कैंकर्यनिरतांस्तत्तत्कैङ्कर्येषु नियम्य भगवतः श्रीनारायणस्य संप्रोक्षणविधिं विधाय नित्यमाराधयन् कल्याणसरोवरपरिशोधनलब्धया प्रतीचीकूलस्थया श्वेतमृत्स्नया कलितोर्ध्वपुण्ड्रः क्षितिपतिमवलोक्य भागवताश्रयस्त्वं भगवदभिवन्दनेन भूयांसि श्रेयांसि लभस्वेत्याशिषं प्रयुञ्जानः सर्वानपि भगवद्विग्रहानवलोक्य तेषूत्सवभगवन्तमलभमानस्तदाप्तये भगवद-

भिव्यक्तिस्थानप्रतिष्ठापनचातुर्यधुर्यो हिमगिरिसदृशधैर्यो गुरुवर्योऽपि निखिलदिव्यदेशशिरोभूषायमाणश्रीनारायणनगरीचूडारत्नरीतिमति श्रीमति यदुक्ष्माभृति नित्योत्सवपक्षोत्सवमासोत्सवसंवत्सरोत्सवान् कलयितुं कौतूहलभरमाविभ्राणो दुरन्तां चिन्तामवाप। तदनु स्वप्नसमागतेनारविन्दासनादिवृन्दारकवन्दितेन श्रीनारायणनामधेयवता भगवता 'कदाचिद्बहुशतसहस्रतुरङ्गियूथपरिवीतो डिल्लीनेता भेरीझांकारघटितब्रह्माण्डदशदिशाभागः सकलमपि भुवनमाक्रामन् मदीयं रामप्रियनामकं बिम्बं निजपुरीं नीतवान्। अतस्त्वं तां पुरीमभ्येत्य तमानय' इत्याज्ञप्तां वाणीं शिरसा वहन् यवनाध्यक्षापहृतोत्सवभगवद्विग्रहसमानयनसमेधमानावधानः सावधानो भगवत्परिकरयूथैः परिवृतस्तद्देशाधीशपरिषदनुसृतो निखिलनगरातिशयविजयसंपादितकीर्तिमल्लीं स्वाभिमतवितरणसंतानवल्लीं नगरीमतल्लीं डिल्लीमुपेत्य तत्प्रभुमभिवीक्ष्य सबहुमानं तदासादितादेशो नानादेशसमानीतभगवद्विग्रहपरम्परापरिपूरिताङ्कणजालां विशालां चन्द्रशालां समेत्य तासु तासु भगवन्मूर्तिषु चान्विष्यान्विष्यापि रामप्रियमलभमानो दुर्मनायमानो दुरन्तचिन्ताकूपारान्तरं गाहमानो विगतालोचनस्तत्कालनिध्यानोपगतनिद्रामुद्रितलोचनस्तत्क्षणमेव प्रासादाधिरूढेन पङ्केरुहवासिनीपरिवृढेन स्वप्नोपागतेन कृपाभरितेन 'किमर्थं चिन्तापरवशोऽसि? अत्रैव निवसन्तं मामुपलभ्य गच्छ' इति निवेदितस्तदवसरे विबुध्य तुलुष्कधुरंधरमुपेत्य 'शाणोपलोत्तेजनेनामलघृणिमणिगणघटनासमुदितविचित्रप्रभाभासमानासमानमुक्ताजालकजालातिरम्ये भवदीयहर्म्ये देवोऽस्मदीयो दीव्यति' इत्यभिधाय विरचिततदाज्ञाप्रतीक्षः कथमपि लब्धाभ्यनुज्ञस्तेन सहैव मणिसौधं प्रतिपद्य तमितस्ततो विचित्य 'अयमेव यदुगिरिनाथः' इति निश्चित्य डिल्लीश्वराय निवेद्य भूयोऽपि तेन 'युष्मदीयोऽयं देवश्चेत् स्वयमेव भवदङ्कतटीमाटीकताम्' इति समीरितो 'भवत्वेवम्' इति ब्रह्मादिदुर्लभमपि भक्तजनसुलभं यदुशैलवल्लभम् 'अव्याजबन्धो वात्सल्यप्रमुखनिखिलकल्याणगुणसिन्धो भुवनजननसमवनहननचा-

तुरीधुरीण नतजनरक्षणक्रियापारीण' इत्यभिष्टूय 'घलंघलितमेखलं रणन्मणिनूपुरं समुदञ्चन्मञ्जुमञ्जीरशिञ्जारवं सत्यमभ्येहि, इमं जनं पाहि' इत्याचक्षाणस्तदुत्तरक्षण एव यवनप्रभुसमक्षमखिलजनमोहनकरत्रिभुवनपवित्रीकरणनिपुणनिजचरणविन्यसनक्रमेण त्रिविक्रमेण भगवता समलंकृतनिजाङ्कः किमेतदित्याश्चर्यपरवशाशयडिल्लीशसमर्पितद्रविणाभरणाद्यनेकोपकरणसहस्रेण सह संपत्कुमारं रत्नशिबिकामारोप्य रात्रिंदिवमविलम्बेनैव यादवमहीधरशिरस्तटीमनीनयत् ।

तत्र चैनं प्रतिष्ठाप्य श्रीभूमिसहितं हरिम् ।
अस्योत्सवविधिं कुर्वन् रेजे रामानुजः सुधीः ॥ २९ ॥

इति श्रीरामानुजाचार्यविरचिते
श्रीरामानुजचम्पूप्रबन्धे नवमः स्तवकः ॥

---

॥ अथ दशमः स्तवकः ॥

श्रीरामानुजयोगिनेतरि यदुक्षोणीभृदीशं गते
लब्ध्वा श्रीपदसंगतिं प्रविलसन्नारायणाख्यां पुरीम् ।
व्यामोहं यवनाधिराजतनया तस्मिन् समाबध्नती
तद्विश्लेषभरासहिष्णुरभवत् तान्तातिकान्ताकृतिः ॥ १ ॥

स्मारं स्मारं मदनजनकं तद्वियोगातिखिन्ना
नाहारेच्छां कलयति परं नो विहारेषु वाञ्छाम् ।
आशाः सर्वाः स्तिमितनयनं शश्वदालोकयन्ती
कान्ता सेयं सपदि सुतरां भ्रान्तचित्तेव जाता ॥ २ ॥

तदानीं किल निखिलनिरन्तरविस्रमरपरिमलभरमनोहरसुमनोगणविराजमानमाधवीमल्लीवल्लीपरिवेल्लितपाटलचम्पकवकुलमन्दार-प्रमुखपादपपरम्पराप्रकटितकुसुमजालस्यन्दमानमकरन्दबिन्दुसंदोहसमास्वादनतुन्दिलेन्दिन्दिरनिकरझंकारपरिपूरितविहारोपवनपरिकथितनिजसमागमान्, चन्दनाचलसमुदञ्चत्पवमानबालकलीलासंचरणा-

पह्वतपरभृततरुणमिथुनरतिश्रमान् रसालकिसलयचर्वणसंपादितमद-मेदुरपरभृतसमुदयसमुदञ्चत्पञ्चमाञ्चितान् विरहिजनहृदयव्यथाविधायकप्रसूनसायकसायकप्रदायकान् संततसंचरमाणशफरनिकरभासुरगभीरशिशिरविमलसुभगंभावुकाम्भोजिनीनिविडतराम्भोरुह-निवहजरीजृम्भमाणमधुझरीलाभलोभससंभ्रमपरिभ्रमद्भ्रमरविसर-परिरम्भणावसरप्रस्फुटत्पक्षपुटविक्षितिनिःसरत्परागपरम्परापरिधूसरान् मधुवासरानवलोक्य यवनविभुतनया पञ्चशरशरनिकरपरिमथितनिजाशया निजरमणविश्लेषभरमसहमाना अवाङ्मनसगोचरसमुपचीयमानविचारपरिदूयमानमानसा मज्जनाशनादिष्वपि निरुद्यमा बभूव ।

शृङ्गारवन्यन्तरसाश्रयन्ती
भृङ्गावलीझङ्करणातिरम्यम् ।
मुकुन्दविश्लेषभरासहिष्णु-
श्चचार कान्ता मदनातितान्ता ॥ ३ ॥

कान्ता सन्ततकान्तसंगतिपराक्रान्ते वनाभ्यन्तरे
चूतान् वीक्ष्य लतासमावृतनिजस्कन्धान् परं ताम्यति ।
पद्मिन्यामपि चक्रवाकमिथुनान्यालोक्य चिन्ताकुला
हा नाथाद्य विहाय मां सुवचनामन्यां समाश्लिष्यसि ॥ ४ ॥

यवनाधिराजतनया समधिगतनया समग्रतरविनया ।
करकमले चित्रपटं चकार सा चित्रपटमालिखितुम् ॥ ५ ॥

डिल्लीनाथतनूभवा स्वकमितुः संचिन्तयन्ती मुहुः
सौन्दर्यं समवाप्तुमेनमलिखत् पञ्चेषुमत्युत्सुकात् ।
बाणासं कनदिक्षुरूपमतुलं चोल्लासमानं घनं
पौष्पं बाणगणं समच्युतमिमं स्वाभीष्टसंसिद्धये ॥ ६ ॥

फुल्लत्पङ्कजमुद्रिकासनवरं तत्काण्डकाण्डोत्करैः
पाद्यार्घ्यैर्यवनाधिराजतनया तद्रेणुसत्पार्चिषि ।
तत्रत्यभ्रमरालिधूपरचनां तत्केसरौघाक्षता-
नप्यापाद्य निवेद्य तन्मधु रहो मारं समाराधयति ॥ ७ ॥

एवमवोचत च—

श्रीवत्साङ्कमिदं न दानवरिपोरिन्दीवराक्षं ध्रुवं
गौरीनायकमूर्ध्नि नेन्दुकलिका त्वचन्द्रहासक्षतिः ।
वेधावक्त्रविलासिनी न च सरस्वत्यङ्गवत्युज्ज्वला
त्वत्कीर्तिः किमु वर्ण्यते रतिपते दोर्विक्रमस्तेऽखिलैः ॥ ८ ॥

स्त्रीषु प्राप्तपराक्रमो मुनिगणे त्वत्साहसो विश्रुतः
पान्थे दूरगते सहायरहिते हिंसा हि ते विश्रुता ।
मार क्रूरतरं त्वदीयचरितं संचिन्तयन् पार्वती-
जानिस्त्वामतनुं चकार सहसाऽहंकारहुंकारकृत् ॥ ९ ॥

स्मर मधुसेवनां पथिकनिष्ठुरवृत्तिमिमां
तनुरहितत्वमेतदनुचिन्त्य मुहुर्भवतः ।
तदनुभवाय हन्त जनकस्तव मीलितदृक्
समजनि मातुलः कृशतनुर्जननी चटुला ॥ १० ॥

रे रे राकाहिमकर रविर्जायसे त्वं मदक्ष्णो-
स्तापस्तादृङ् मलयपवनोज्जृम्भते तावकीनः ।
किं वक्ष्येऽहं भवति भवतोरन्यथाभाव एवं
तत्सुव्यक्तं चपलचपलं मानसं ज्ञातमासीत् ॥ ११ ॥

स चाहं च प्रेम्णा कुसुममयशय्यान्तरगतौ
मुहुर्वेलातीतप्रथितरतिसंतोषभरितौ ।
भवामः श्रीरामावरज इति सूतः पुनरसौ
महान्विघ्नः प्राप्तो व्यरचयदिवावां विरहिणौ ॥ १२ ॥

एतद्बिम्बमहं दिवा सुरुचिरं संवीक्ष्य कौतूहलात्
तद्गण्डस्थलचुम्बनाद्यकरवं तत्काललीलोचितम् ।
सोऽयं सुन्दरमूर्तिमान्निशि मया साकं रहस्तत्त्वत-
स्तत्सर्वं प्रकटीचकार विरहे तस्यास्ति किं जीवितम् ॥ १३ ॥

कत्या मे मनसो व्यथातिमहती व्यत्यासतो वा विधे-
रत्यासक्तिरियं कृतातिचपले सत्यातिगे हा कथम् ।

प्रत्यासीदति वा मनोहरतमः पत्या पुनः संगमः
कृत्याकृत्यमहं न वेद्मि नितरामत्याकुला मे मतिः ॥ १४ ॥

स्मरः कठिनमानसः कलयति व्यथां भूयसी-
महं प्रियतमं विना विविधकामलीलाचणम् ।
त्यजेयमिति जीवितं समधिकां धृतिं बिभ्रती
चकार विविधां मतिं मनसि भाविनीं भामिनी ॥ १५ ॥

इति प्रतिपदं रतिप्रतिमवेषया योषया-
ऽनया विविधभाषया भुवनभूषयोदीरितम् ।
निशम्य वचनं मुहुः प्रियसखीजनः सादरं
चकार परिसान्त्वनं न च शशाम तस्या व्यथा ॥ १६ ॥

एवं वारिजलोचनाविरचितोल्लेखं प्रसूनाशुगं
निर्वर्ण्य प्रणयिन्यतिप्रणयितामासाद्य तान्ताधिकम् ।
आलीभिः परिसान्त्विता बहुविधं तैस्तैर्विलासक्रमैः
शय्यां सूनमयीमुपाविशदिव प्रायोपवेशोत्सुका ॥ १७ ॥

आलीपालिषु काचन प्रियसखी कामाशुगैराहतां
तामेनां परिसान्त्वयन्त्यकथयद्वाणीं मनोहारिणीम् ।
श्रीरामप्रियसङ्गसूचनपरामाकर्ण्य तस्याः स्वयं
मन्वानेयमुपश्रुतिं सुमहितां संप्राप्तहर्षाभवत् ॥ १८ ॥

चिन्तयन्ती मुहुः कान्तं नितान्तं स्वान्तजार्दिता ।
कान्ता कान्ताकृतिः श्रान्ता शुद्धान्तं समुपाविशत् ॥ १९ ॥

अथायमपि भगवान् श्रीरामप्रियनामवान् श्रीरामानुजसंयमिसार्वभौमेण विनयाभिरामेण विविधोपचारपुरःसरमुत्सवपरम्परया समुपलालितोऽपि स्वान्तजातेषुजातसन्ततसंताडितस्वान्ततया रतिमलभमानो दूरोत्सारितनिजाभिमानो मलयानिले वज्रायुधतां प्रियजनसंलापे निर्लोलुपतां मल्लिकादिकुसुममालाजाले कुन्तसन्ततिक्रूरतां हरिचन्दनालेपे खदिराङ्गारतामभृतमयूखमालिन्यंशुमालितामाहारविहारयोर्निरादरतां निखिलोपचारेषूदासीनतामनुभवन्

दुरन्तविरहसंतापसंततिसंजनितश्रमभरपरिखिन्नमना यवनात्मजा-विरहजनितनिजचरितमुवर्णयितुं प्रचक्रमे—

कर्पूराञ्चितशीतलातिरुचिरश्रीखण्डमङ्गारतां
माल्यं सूचिपरम्परासदृशतां चन्द्रोऽपि तिग्मांशुताम् ।
आलापः सवयोभिरप्यतितरां हालाहलक्रूरतां
कान्ताया मम विप्रयोगसमये हा हन्त संगाहते ॥ २० ॥

तस्यास्तद्वदनं प्रमोदसदनं तल्लोचने सारस-
श्रीगर्वोद्धतिमोचने तदधरो माध्वीकधाराधरः ।
तद्वाक्यं सरसामृतस्तुतिकृतौत्सुक्यं तदीयौ कुचौ
कोकद्वन्द्वरुचौ पुनस्त्ववयवः सर्वोऽपि मोहावहः ॥ २१ ॥

हन्तायं तनयोऽपि मे भवति हा हन्ताधुना किं ब्रुवे
संतापाय पटीरशैलपवनोऽनन्ताय संजायते ।
संतापज्वरसृष्टिकौशलमिदं कान्तावियोगादति-
श्रान्ताङ्गे मयि संतनोति सफलं हन्तावसन्नोऽप्यसौ ॥ २२ ॥

सा तन्वी सरसाभिलापचतुरा तां चिन्तयाम्यन्वहं
हृद्यं साधु कृतं तया सह रतं तस्यै मदीयं वपुः ।
तस्याः संभवति प्रमोदविततिस्तस्यास्त्वहं किंकर-
स्तस्यामेव ममानुरक्तमधिका यासीन्मया संगता ॥ २३ ॥

मन्ये पन्नगयोगिवाक्यमनिशं तस्या मुखं किं पुन-
र्वीक्षिष्येऽप्यहमेतदाकृतिकलां वक्तुं कथं शक्नुयाम् ।
किं वक्ष्यामि तदीयमन्मथकलापाण्डित्यमन्यादृशं
ताम्यत्येवमहर्निशं यदुगिरीशानः प्रियां चिन्तयन् ॥ २४ ॥

एवं नितान्ततान्तं श्रीकान्तं वाहिनीविभुर्वीक्ष्य ।
तत्संनिधिमेत्य रहः समपृच्छत्किमिति सान्त्वपूर्वमिमम् ॥ २५ ॥

सोऽयं सूत्रवतीसखेन भगवान् पृष्टः शयानो रहः
शय्यायां नवमल्लिकादिकुसुमस्तोमोज्ज्वलायां निशि ।

कान्तां तामनुचिन्तयन् सुवदनां कामाशुगैस्ताडित-
स्ताम्यंस्तद्विरहासहिष्णुरधिकं सेनान्यमेवं जगौ ॥ २६ ॥

डिल्लीविलोकनकुतूहलतः कदाचित्
तामेत्य तत्पतिसुताप्रणये प्रहृष्टः ।
कुर्वंस्तया सह रहो विविधान्विहारां-
स्तत्केलिसौधवसतिं कृतवान् पुराहम् ॥ २७ ॥

सा कान्ता कृशमध्यमा कृशतनू राकेन्दुबिम्बानना
बिम्बोष्ठी द्रुतजातरूपविलसत्कुम्भोरुवक्षोरुहा ।
एणीशावकवीक्षणा सरससंलापा सुरूपा पुर-
श्चिक्रीडातितरां मम स्मरविभोः साम्राज्यलक्ष्मीरिव ॥ २८ ॥

फणियतिराजसंनुतिगिरा मम मुग्धधियो
यवनमहीपतीन्द्रतनयामतिरूपवतीम् ।
ततनुकान्तिनिर्जिततटित्ततिमिन्दुमुखीं
तपति विहाय चित्तमधुना पृतनाधिपते ॥ २९ ॥

तया महितरूपया विहितमुग्धसंलापया
प्रशस्तनिजवेषया मयि कृतातिसंतोषया ।
मया कलितरङ्ग्या ललितजातरूपाङ्ग्या
विना कनदपाङ्ग्या मम सखे कथं स्याद्रतिः ॥ ३० ॥

श्रीरामानुजयतिवरवचनं मोचाकचाकचिप्रौढि ।
अनतिक्रमणीयमिति प्राप्तोऽहं तां विहाय सैन्यपते ॥ ३१ ॥

इति यदुशैलनायकगिरं विनिशम्य मुहु-
र्विरहसमाकुलं प्रतिजगाद तमेवमसौ ।
यतिपतिरेष भक्तिभरितस्त्वयि वत्सलतो
यवनसुतां त्वया सह घटयिष्यति ताम् ॥ ३२ ॥

सेनाधिपो भगवतो वचनं निशम्य
रामानुजं यतिपुरन्दरमेवमूचे ।
रामप्रियो यवननायिकया वियुक्तः
खिद्यत्यसौ सपदि योजय तामनेन ॥ ३३ ॥

श्रीमल्लक्ष्मणयोगिवर्य जगतामाचार्य सुस्थैर्य ते
वर्ण्यः किं महनीयभव्यमहिमा वाचामसीमा यतः ।
डिल्लीकल्पितवासमब्जभवनावासं यदुक्ष्माधरं
भक्त्यैनं समनीनयः सुघटयानेन प्रियां तां ततः ॥ ३४ ॥

एवं सैन्यधुरीणवचनं प्रतिपदविरचितश्रवणामृतसेचनं मोचासदमोचनं साधुवचनमुपश्रुत्य यत्यग्रणीर्यवनापत्यं पत्या सह घटयितुमत्यादरेण महत्या श्रीवैष्णवगोष्ठ्या परिवृतो भूयोऽपि डिल्लीं प्रतिष्ठमानस्तत्कार्यघटनोल्लसन्मोदभरसमेधमानस्तत्तद्देशाधीशसंसेव्यमानः श्रीवैष्णवसाम्राज्याधिपत्यसूचकनिजतेजोविराजमानः सरयं डिल्लीपतिमेत्य 'श्रीरामप्रियः सकलमपि भुवनमेकातपत्रतया प्रशास्ति। तस्मै भवत्कन्यामतीव धन्यामनन्यसामान्यलावण्यसौशील्यादिकल्याणगुणमान्यां प्रदाय क्षीराकूपार इव मिथिलाधिनाथ इव निचुलापुरीपरिबृढ इव भगवतः श्वशुरभावमवलम्ब्य धन्यतमो भव' इति तमाचचक्षे ।

अनन्तरमसौ तुरुष्कशिखामणिः धन्यंमन्यमानः श्रीरामानुजयतिपतिगिरमङ्गीकृत्य जङ्गममहीधरानिव समुत्तुङ्गान् मातङ्गान्निजगतिविजितपवनरयान् हयान् समग्रसैन्याभिरामान् ग्रामान् अनर्घरत्नघटितनैकाभरणजालान्यपरिमितयौतकद्रव्याणि च वितीर्य निजकन्यकां दिव्यरत्ननिकरप्रभापेटिकां कनकशिबिकामारोप्य संप्रहृष्टमनाः साकमनेन प्रेषयामास ।

श्रीमान् रामानुजार्यो यवनविभुसुतां सर्वकामैरुपेतां
प्रीतां रामप्रियेण प्रथितगुणवता संगतां संवितन्वन् ।
तद्वाञ्छां पूरयित्वा समधिकमहिमा सादरं प्रीतचेता
दिक्कान्तालीदुकूलायितमहितलसत्कीर्तिपूर्तिर्बभासे ॥ ३५ ॥

तदनु,

खलान् बद्धान् सर्वानुपलघनयन्त्रप्रतिहतान्
विधाय श्रीरामप्रियमहितदिव्योत्सवततिम् ।

प्रकुर्वाणस्तत्र प्रमदभरितो लक्ष्मणमुनि-
र्व्यतानीदावासं सह बुधजनैर्द्वादश समाः ॥ ३६ ॥

श्रीरङ्गवृत्तान्तविवित्सया पुरा
श्रीवैष्णवद्वन्द्वमुदारवैभवम् ।
संप्रेषितं तत्पुनरेत्य पत्रिकां
प्रादान्मुदा लक्ष्मणयोगिने तदा ॥ ३७ ॥

सोऽपि तां पत्रिकामादाय सादरं वाचयति स्म—

श्रीमन् संयमिसार्वभौम भवता सर्वं समाकर्ण्यतां
श्रीरङ्गस्थलवृत्तमेतदधुना चोलोऽभियातिस्तव ।
श्रीमद्भागवतापचारकलनात् क्रिम्यात्तकण्ठो भव-
न्नेतद्दुर्जनसंगतेः फलमिति प्राप्तोऽनुतापं हृदि ॥ ३८ ॥

कालप्रेषितदूतजातकलितप्राणप्रयाणत्वरः
श्रीरामानुजयोगिपुंगवपदाम्भोजातविद्वेषतः ।
यातोऽहं गतिमीदृशीमिति सुतं स्वं विष्णुभक्तोत्तमं
कृत्वा राज्यपदेऽभिषिच्य विलयं प्रायादपायादयम् ॥ ३९ ॥

एवं पत्रिकया सर्वं विज्ञाय यतिचन्द्रमाः ।
श्रीमान् कुवलयानन्दकारी संसेवितो बभौ ॥ ४० ॥

ताभ्यां संतोषशंसिभ्यां श्रीरामानुजयोगिराट् ।
बहुरत्नं मन्त्ररत्नं प्रददौ पारितोषिकम् ॥ ४१ ॥

तदनु,

श्रीकल्याणसरोवरं कलयितुं स्नानादिनित्यक्रियां
प्राप्तः साकमनेकशिष्यनिवहैः श्रीलक्ष्मणार्याग्रणीः ।
तत्काले सचिवाः समग्रविनयाश्चोलेन्द्रसंप्रेषिता-
श्चिन्ताटव्यसिपुत्रिकां समदिशंस्तस्मै मुदा पत्रिकाम् ॥ ४२ ॥

'श्रीमल्लक्ष्मणसंयमीन्द्र भवते चोलात्मजः सांप्रतं
सेवापूर्वकमातनोम्ययमहं विज्ञापनां मे पिता ।

पाषण्डानुसृतेर्गतः प्रमुषितप्रज्ञः प्रणाशं रया-
दन्तेवासिनमेहि मां कलयितुं रङ्गाभिधानां पुरीम् ॥' ४३ ॥

कल्याणजननी ह्येषा कल्याणतटिनी मम ।
इति स्म पत्रिकां वीक्ष्य यतीन्द्रः प्रावदन्मुदा ॥ ४४ ॥

तदनु रयादयं नरहरिं समुपेत्य विभुं
यतिनृपतिर्निवेद्य यदुभूधरवासरतम् ।
नियमनमद्य मे प्रदिश रङ्गपुरीं श्रयितुं
तमिति जगाद सोऽपि ददावतिखिन्नमनाः ॥ ४५ ॥

अनन्तरं यादवमहीधरशिरोऽलंकारमणिं विनतजनताभीष्ट-वितरणचिन्तामणिं श्रीनारायणं समधिकदयोपेतं डिल्लीवल्लभत-नयासमेतं भक्तजनप्रियं श्रीरामप्रियं च प्रणम्य समधिगतपरम-भक्तिः प्रणयोक्तिपुरःसरं तेन प्रभविष्णुना तद्विरहासहिष्णुना किमिति भवति शश्वत्प्रेमभरसवित्रीं मैत्रीं विरचितवानहमधुना भवन्तं विना कथमिह निवसामीतीरयता भगवता कथंचित्कृता-भ्यनुज्ञः स्वयमपि पुत्रवत्सलतया तं विहाय गन्तुमक्षमो बहिरभ्येत्य द्विपञ्चाशन्नामकान् स्वानुधावकान् समस्तानभिवीक्ष्य संपत्कुमार-मुपलालयन्तो भवन्तोऽत्रैव निवसन्त्वित्याज्ञाप्य शिल्पिमुख्येन स्वं विम्बं परिकल्प्य निजविश्लेषमसहमानेभ्यस्तेभ्यः संवितीर्य श्रीरङ्गयात्राभिमुखः सह्यकन्यातटीं निजपदकमलविन्यासेन धन्या-मातन्वानस्तत्तीरपथेनाभ्यागच्छन् रसालवकुलपनसामलकजम्बू-जम्बीरचम्पकपुंनागकुन्दकुरवककोविदारमन्दारप्रमुखमहीरुहनिवहदू-रीकृततपनमरीचिजालां विशालां शालामवलोक्य मार्गश्रमं विधुन्वानः श्रीरङ्गनगरीशिरोमणिभावविभ्राजमानमहोन्नतगोपुरनि-करविलोकनमोदमानमानसः समुज्जीवितसाधुसार्थे श्रीमुखतीर्थे परिकल्पितमज्जनः संमोदिताखिलसज्जनः परिधूतकाषायवसनयुग-लस्तत्तदवयवसंनिवेशलसमानस्वाभ्यन्तररुचिरश्रीचूर्णरेखाञ्चितद्वे-तमृत्परिकल्पितशुद्धोर्ध्वपुण्ड्रविसरः स्वोभयपार्श्वविभूत्याधिपत्य-सूचकतुलसीमणिपद्माक्षमालायुगलपरिशोभितकन्धरस्त्रिवर्गप्रवणज-

नशिक्षणप्रचण्डतरत्रिदण्डपरिमण्डितशयकुशेशयः श्रीरङ्गराजसंप्रेषितश्रीरङ्गस्थलनित्यवासरसिकसाधुजनप्रत्युद्गम्यमानः सबहुमानं श्रीरङ्गधुरीणसंनिधिमुपेत्य सभक्तिप्रकर्षं सहस्रकृत्वः प्रणम्य स्वावलोकनकन्दलन्महानन्दतुन्दिलप्रेमपरवशनिजाशयेन स्वकीयविश्लेषासहिष्णुना निजसंगतिलाभोन्मदिष्णुना निखिलकल्याणगुणवता तेन श्रीरङ्गभूरमणेन श्रीसुरभिलतीर्थशेषापटीमालायुगलीशठकोपादिपुरःसरं सादरं बहुमतस्तदीयलावण्यमनुभवंस्तत्रैव क्षणमवर्तिष्ट ।

तदनु श्रीरङ्गनाथोऽप्येनमवादीत्—

गता क्वचन लीनतां पुनरुपागता शेषिता
ममेह्युपकृतिः कृता सुमहतीति रङ्गप्रभुः ।
प्रशस्य बहुलक्षणं कुमतिवर्गसंशिक्षणं
क्रियास्वतिविचक्षणं बहुमतिं मुदास्मै व्यधात् ॥ ४६ ॥

श्रीरामानुजयोगिवर्य कुमतिव्रातावलेपप्रथा-
चार्यैकप्रथमानवीर्यनिजवाक्चातुर्यसंभावित ।
प्रख्याताद्भुतवेदमौलियुगलीभावं मुदा बोधय-
न्नार्येभ्योऽनिशमार्यवर्य निवसंस्तत्रैव भूयाः सुखी ॥ ४७ ॥

तमेवमुक्त्वा तपनीयकाण्ड-
श्वेतातपत्रैरपि चामराभ्याम् ।
वाद्यैरनेकैः सह रङ्गनेता
संप्रापयामास मठं यतीन्द्रम् ॥ ४८ ॥

तदानीमेव

श्रीरङ्गक्षितिभूषणं विजयिनं श्रीलक्ष्मणं सद्गुणं
चोलेन्द्रो विनयादुपेत्य विनतो वेत्रं च तां मुद्रिकाम् ।
धारापूर्वकमादरात् स्वयमदादस्मै स्वताताहितं
द्रोहं संपरिमार्ष्टुमेवममलप्रज्ञाविशेषाश्रितः ॥ ४९ ॥

चोलेन्द्रार्पितरङ्गभूपतिमहासाम्राज्यचिह्नायित-
श्रीमद्वेत्रपरम्परां सुमहितां तन्मुद्रितां तत्क्षणात् ।

श्रीवाधूलकुलाब्धिकौस्तुभमणिश्रीदाशरथ्याह्वय-
श्रीमद्देशिकवल्लभाय मुमुदे योगी प्रदायादरात् ॥ ५० ॥

अनन्तरं च,

गुरुपुण्डरीकघनपूर्णदेशिका-
त्मजपुण्डरीकमहिराजयोगिराट् ।
समसान्त्वयद्बहुकवाक्यविस्तरैः
स च सान्त्वितः सुविनयानतोऽजनि ॥ ५१ ॥

श्रीरामानुजयतिवर-
रहिते रङ्गे कथं वसेयमिति ।
वनगिरिगतकूरेशं
योगी भूयोऽप्यनीनयद्रङ्गम् ॥ ५२ ॥

तदनु लक्ष्मणयोगिधुरन्धरः
समधिकप्रियकूरगुरूत्तमम् ।
समभिवीक्ष्य दृढं परिरभ्य तं
प्रमदबाष्पममूमुचदाह च ॥ ५३ ॥

क्रिमिगलचोलभूपकलितां महतीं विपदं
किमिति समीरयामि विमलाशय कूरगुरो ।
निजनयनद्वयीमपनयन्मयि मांसमयीं
स्वयमभजः प्रमोदजननीं खलु बोधमयीम् ॥ ५४ ॥

तदनु विनयगुरुः प्रणयसान्द्रेण यतीन्द्रेण भूयोऽपि निगमान्तादिग्रन्थावलोकनसाधननयनसंपादनाय सकलाभीष्टवितरणपारीणवारणगिरिधुरीणश्रीवरदराजस्तवं विरचयेत्याज्ञप्तस्तथैव तं निर्वर्तयामास ।

यतीन्द्रः करिशैलेशस्तोत्रे निर्वर्तिते तदा ।
तेनैव कूरगुरुणा साकं काञ्चीं समभ्ययात् ॥ ५५ ॥

अनन्तरं निजहृदन्तरतन्तन्यमानानन्तानन्तगुणानुभवसरःपूरपरीवाहरूपस्तोत्रविज्ञापनपरे प्रज्ञावदग्रेसरे स्वचरणकमलसमग्र-

भक्तिगुरौ कूरगुरौ करिगिरिधुरन्धरः समधिगतसमधिकप्रेमभरस्तद-भीष्टं वितरीतुकामो रामानुजगुरुसंगतिरहितावसरे कूरेशमाहूय भवदभिमतमभिप्रार्थयेत्यभिधाय तेन रामानुजगुरुवचनोदश्चितं वरं चातुर्ग्राम्युजीवनाय प्रवितरेति विज्ञापितः कुन्देन्दुहासं मन्दहास-मङ्कूरयामास। तदिदमाकर्ण्य यत्यग्रणीः क्रोधकलुषीकृतचेताः कूरनाथमभिवीक्ष्य मदन्तरे भगवति प्रसन्ने किमिति नयनयुगलीं न याचितवानिति साधिक्षेपमाचक्षाणः करिगिरिपरिवृढमभिवीक्षि-तुं मामवलोकितुमपि दृष्टिसंपादनेन भवितव्यमिति तमन्व-शात्।

तच्छ्रुत्वा वचनं तस्य कूरनाथः सुधीर्जगौ।
तथैव दृश्यते रूपं वरदस्य च तावकम्॥ ५६॥

इति प्रतिवचः श्रुत्वा यतीन्द्रस्तत्परीक्षितुम्।
कीदृशो वरदो ब्रूहीत्युक्त एवमसौ जगौ॥ ५७॥

भास्वद्रत्नविभूषणोज्ज्वलतरं नीलाम्बुदश्यामलं
भास्वत्कोटिसहस्रभास्वरतरं देवस्वरूपं मया।
संदृष्टं विमलोपवीतललिता दिव्योर्ध्वपुण्ड्रोज्ज्वला
त्वन्मूर्तिश्च विलोकिता गुरुमणे द्रष्टव्यमन्यन्न मे॥ ५८॥

आकर्ण्य कूरगुरुवाक्यमतिप्रहृष्टः
सप्रेम तं यतिपतिः परिरभ्य दोर्भ्याम्।
तेनैव साकमभजद्भिभवैकतुङ्गं
रङ्गं समग्रगुणरङ्गभृदन्तरङ्गम्॥ ५९॥

स्वाचार्यपञ्चकसुतान् सुगुणैरुपेता-
स्तापादिपञ्चकयुतान् विरचय्य पूतान्।
श्रुत्यन्तपाठनरतान् धिषणासमेतान्
योगी दिशासु विततान् व्यतनोदथैतान्॥ ६०॥

एवमखिलसाधुसार्थरत्नखनीदर्यां श्रीमहाभूतपुर्यामतिगम्भीर-संसारापाराकूपारान्तरनिमग्ननिखिलजीवजातसमुत्तारणकृते पन्नग-परिबृढो हारीतकेशवाध्वरितनूभवभावमवलम्ब्य रामानुज इति मुख्यामभिख्यामादिश्राणः समुपनीतोऽयमधीतवेदशास्त्रो वधूटी-सहितः प्रथितप्रभावयादवप्रकाशसकाशे पापठ्यमानवेदान्तशास्त्रः पूर्वपक्षाभिधायिनं मायिनं विदितविशिष्टाद्वैतसिद्धान्तपद्धतिं भाग-वताग्रेसरं विदधानो द्वितीयाश्रमदूरीकरणेन गृहीततुर्याश्रमो यामुनमुनिसेवाकुतूहलाद्दूततरमभ्यागच्छंस्तदीयचरमदिव्यमङ्गलवि-ग्रहं सभक्तिविनयमासेव्यानमिततदीयाङ्गुलित्रयीमभीष्टत्रयीसूचन-परामवलोक्य किमेतत्स्वाभाविकमाहोस्विदौपाधिकमिति विचार्य तदीयान्तेवासिमुखेन स्वाभाविकं न भवतीदमाधुनिकमित्यवधार्य व्याससूत्रव्याक्रियां व्यासपराशरोपकारस्मृतिं च विरचय्य तदभीष्ट-त्रयीपरिपूरणप्रवीणः समधिकमतिमद्वैतसिद्धान्तप्रतिष्ठापनधौरेयं यज्ञमूर्तिनामधेयमेकदण्डिनमतिप्रचण्डतरभारतसांपरायन्यायेन वाद-युद्धेन विजित्य तं विशिष्टाद्वैतसिद्धान्तसिद्धान्तःकरणं विधाय तापादिपञ्चसंस्कारसंपत्त्या स्वनाम्ना चाभिभूषयन् श्रीरङ्गनायकं श्रित-जनशुभप्रदायकं विविधैरुपचारैरुपलालयन् प्रणतिं प्रकुर्वाणस्तदाज्ञया दिग्जैत्रयात्रया धरित्रीवलयं पवित्रीकुर्वाणः कदाचित् क्रिमिकन्धर-जनिष्यमाणव्यथाव्याजेन प्रतीचीं ककुभमभिप्रतिष्ठमानो यादवा-चलशिखरालङ्कारमणिं श्रीनारायणं डिल्लीवासप्रियरामप्रियसमान-यनतन्तन्यमानोत्सवपरम्परया पूजयन् द्विपञ्चाशन्नामधेयान् स्वान्ते-वासिनस्तदन्तेवासिनो वितन्वानस्तदनुज्ञया श्रीरङ्गराजधानीमभ्येत्य श्रीरङ्गनाथं प्रणम्य श्रीमहापूर्णतनयं समधिगतविनयं पुण्डरीकाक्ष-नामधेयं समाश्वास्य कूरनाथमालिङ्ग्य श्रीवरदराजस्तवमहिम्ना तमेनमपाङ्गवीक्षणसनाथमारचय्य श्रीशैलपूर्णश्रीमहापूर्णादिस्वाचार्य-तनूभवान् शङ्खचक्राङ्कनपूर्वकमधिगतदर्शनरहस्यान् वितन्वन् साधु-जनमान्यः श्रीरङ्गराजधान्यामेव सुखमुवास ।

---

श्रीमान् रामानुजार्यः श्रितनिवहपरित्राणचातुर्यधुर्यः
प्रालेयाहार्यधैर्यः प्रतिकथकगणस्थैर्यविध्वंसिचर्यः ।
मर्यादोपेतचर्यामुदितहृदयसद्वर्यसृष्टत्सपर्यः
शेषः साक्षादुदीतो जगति विजयतां केशवाचार्यसूनुः ॥ ६१ ॥

इति श्रीवाधूलकुलकलशजलनिधिकौस्तुभोभयवेदान्ताचार्यसाम्रा-
ज्यपट्टाभिषिक्तकल्याणवल्लीकल्याणवेदपादरामायणाद्यनेकप्र-
बन्धनिर्माणधुरीणश्रीमद्रामानुजदेशिकसार्वभौमचरणा-
रविन्दचञ्चरीकेण तत्कृपालब्धसकलविद्यावैश-
द्येन तत्सागर्भ्यविभूषणब्रह्मर्षिभावना-
चार्यविबुधवर्यतनूभवेन रामानुज-
दासेन विरचिते श्रीरामा-
नुजचम्पूप्रबन्धे दशमः
स्तबकः ॥

श्रीरामानुजचम्पूप्रबन्धः समाप्तः ॥

---

MADRAS : PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.

श्रीः

# श्रीरामानुजचम्पूटिप्पणम् ।

## प्रथमः स्तबकः ।

---

श्लो १. आदौ सर्वमङ्गलावाप्त्यर्थं "मङ्गलानां च मङ्गलम्" इति परममङ्गलतया निर्दिष्टभगवद्दिव्यमङ्गलविग्रहशोभां प्रार्थयते। मृगमदः; कस्तूरी; तद्रचिता मकरी मकराकारा पत्ररेखा। सह्यजा कावेरीनदी। प्रणाली जलनिर्गममार्गः। मुद्राशिं संतोषराशिम्।

२. आम्नायोत्तंसाः वेदान्ताः। हाटकं सुवर्णम्। फणिरमणः शेषः। चाकशीति; यङ्लुगन्ते रूपम्।

३. पटीयान्; अतिशयेन पटुरिति ईयसुन्प्रत्ययान्तः। मकुटीतटः किरीटदेशः। अरुणमणिभावं पद्मरागताम्। शुक्लवर्णा अपि मुक्ता देवपादाम्बुजच्छायोपधानात् रक्तवर्णा जाता इत्यर्थः।

४. वक्षःपीठे श्रियं कौस्तुभं श्रीवत्साख्यं लक्ष्म च बिभ्रदित्यर्थः। गर्भभवनम्; देवालये भगवद्विग्रहनिवासस्थानभूतमन्तर्गृहम्। धवलमपि फणिपतिं नीलं कुर्वदित्यन्वयः।

५. लक्ष्मीक्षितियुवती श्रीभूदेव्यौ "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति भगवन्महिष्यौ श्रुतिप्रसिद्धे। लङ्कापरिवृढसनाभिः लङ्केश्वरभ्राता विभीषणः। भानोस्तनयककुभं यमदिशं दक्षिणां दिशमित्यर्थः। श्रीरङ्गे भगवान् रङ्गनाथः दक्षिणामुखः शयानो वर्तते।

६. चोलक्ष्माकमितुः चोलराजस्य। अभिरामो वरः सुन्दरो जामाता। चोलराजस्य दुहितरं श्रीरङ्गनाथ उपयेमे। तदा उद्वाहसमये स अतीव सुन्दररूपः प्रचकाशे। तत आरभ्य श्रीरङ्गनाथस्य रम्यजामाता इति नाम प्रसिद्धमिति सांप्रदायिकी कथा।

७. कनकतटिनी कावेरी। श्रीरङ्गे कावेरी उत्तरकावेरी दक्षिणकावेरीति च द्विधा प्रवहति। तयोर्मध्ये श्रीरङ्गक्षेत्रं वर्तते।

८ तुषारैः शीतलैः। दुरन्तं मदन्तःसंतापम्; श्रीमहालक्ष्मी-कटाक्षमन्तरा प्राणिनां तापत्रयं नापगच्छति। अतः तत्प्रशमने सैव प्रभवतीत्यर्थः। अत्र "श्रेयो न ह्यरविन्दलोचनमनःकान्ता-प्रसादादृते संसृत्यक्षरवैष्णवाध्वसु नृणां संभाव्यते कर्हिचित्" इति महतां सूक्तिरनुसंधेया।

९. सरस्वतः समुद्रात् प्रख्यातिः प्रादुर्भावो यस्याः सा। सरोजाक्षस्य "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति श्रुतिप्रतिपाद्यस्य पुण्डरीकाक्षस्य अहंता शक्तिरूपा।

१०. गीर्वाणानां स्थपतिः देवेन्द्रः। पुरा नष्टस्वाराज्यो देवेन्द्रो लक्ष्मीं स्तुत्वा तत्प्रसादात् पुनः स्वाराज्यं प्रतिपेदे इति पौराणिकी कथा।

११. धीराः धीमतामग्रेसरा विद्वांसः। परिवाहः अपरिमितस्य जलस्य प्रवाहः। मोचा कदलीफलम्। परीणाहं वृद्धिम्।

१२. उत्तंसयन् शिरोभूषणं कुर्वन्। द्वयमनुं द्वयाख्यं मन्त्रविशेषम्। शठारिं मुनिं, शठकोपमुनिं प्रपन्नजनकूटस्थ इति श्रीवैष्णवसमयप्रसिद्धम्। पृतनाध्यक्षः, भगवतः सेनापतिः विष्वक्सेन इति प्रसिद्धः। मदीयं भरं बिभर्तु, आत्मरक्षणरूपं भारमङ्गीकरोतु; अनेन भरन्यासः शरणागतिरिति च श्रीवैष्णव-समयाचारप्रसिद्धः स्वरक्षणभारनिक्षेपो विवक्षितः।

१३. अनेनापि पद्येन विष्वक्सेनप्रणतिरेव क्रियते। माध्वी मकरन्दम्। वेत्रं बिभ्रतं, विष्वक्सेनस्य वेत्रधरणं प्रसिद्धम्। सूत्रवतीति तन्महिषीनाम। अत्र "वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम्। यद्वेत्रशिखरस्पन्दे विश्वमेतद् व्यवस्थितम्॥" इत्यभियुक्तसूक्तिरनुसंधेया।

१४. चिञ्चा तिन्त्रिणीवृक्षः। सत्वरमेव; मातृगर्भान्निःसरणानन्तरमेव शिशूनां स्वाभाविकं क्रन्दनस्तन्यपानादिकं विहाय समीपे स्थितस्य तिन्त्रिणीतरोः कोटरं प्रविश्य भगवदुपासनायां

निरतोऽभूदिति अनितरसाधारणोऽयं तन्महिमा तत्र तत्र प्रमाणेषूपश्रूयते। यद्गाथेत्यादि; भगवदवताराणां महिमा यथा अदसीयैः द्राविडगाथासहस्रैर्व्यक्तीभवति न तथा चतुर्भिरपि वेदैः नापि अष्टादशभिः पुराणैरित्यर्थः। भगवद्गुणैकतानत्वादेवादसीयानां भाषाप्रबन्धानां दिव्यप्रबन्ध इति सार्वजनीनो व्यवहारः, भाषाप्रबन्धत्वेऽपि वेदतुल्यप्रामाण्यं सर्वोपजीव्यत्वमित्यादिको महिमातिशयो विद्योतते। शठद्वेषिणम्; मातृगर्भान्निःसरणसमये इतरशिशूनिवात्मानमप्यभिभवितुमागतं शठाख्यं वायुविशेषं योगमहिम्ना अभिभूय पूर्वजन्मारब्धोपासनायामेवातिष्ठतेति पौराणिकी कथा।

१५. अस्मिन् पद्ये दिव्यप्रबन्धमहिमोपवर्ण्यते। क्षीरामृतद्राक्षादीनां संघातरूपोऽयमदसीयो दिव्यप्रबन्धः रसं जानातीति रसज्ञा इति व्युत्पत्त्या रसज्ञातृत्वरूपं प्रवृत्तिनिमित्तं पुष्कलं चकारेत्यर्थः। दिव्यप्रबन्धगाथानां पारायणे क्रियमाणे तावानानन्दो जिह्वाया भवति यावान् क्षीरामृतद्राक्षादीनां संमिश्रितानां पान इति भावः।

१६. शठारातेर्वाणीविलसितं श्रीशठकोपाविष्कृतद्रमिडोपनिषदम्। घन इव ववर्ष क्षितितले; यथा मेघः समुद्रजलं गृहीत्वा सर्वोपभोगार्हं स्वादु जलं वर्षति तद्वत् नाथमुनिरपि श्रीपराङ्कुशदासाभिधानात् आचार्यात् दिव्यप्रबन्धैकदेशमुपलभ्य योगसाक्षात्कृतेन शठकोपमुनिनोपदिष्टां द्रमिडोपनिषदं लोके प्रवर्तयामासेति कथा।

१७. यदुपज्ञम्; येनोपज्ञायते आदौ अवगम्यत इति यदुपज्ञम्; "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति नपुंसकत्वम्। भगवद्बोधायनटङ्कद्रमिडाचार्यादिभिः प्रवर्तितमौपनिषदं विशिष्टाद्वैतमतं मध्ये प्रवर्तकाधिकारिविरल्यात् विच्छिन्नप्रायमभूत्। तत् श्रीमन्नाथमुनिना न्यायतत्त्वयोगरहस्यादिभिर्ग्रन्थैः पुनः प्रतिष्ठापितमिति तच्चरित्रविदः। मुदां निधिः; ब्रह्मानन्दानुभवैकपरः।

१८. श्रीमन्नाथः श्रीमान्नाथमुनिः। पद्मोल्लासकरैः कटाक्षनिकरैः; कटाक्षपातेनाश्रितानां मोक्षश्रीसंपादकमित्यर्थः। "सा हि श्रीरमृता सताम्" इति मोक्षसंपदेव हि अमृता श्रीरिति श्रूयते। पद्मेक्षणः; पुण्डरीकाक्षाभिधान आचार्यः।

१९. अत्र भगवता रामचन्द्रेण सह राममिश्रस्याचार्यस्य श्लेषानुप्राणितोपमा वर्ण्यते। शैवधर्मदलनात्; शैवाचारस्य दलनात्, शैवधनुषो दलनादिति च। धर्मशब्दो धनुर्वचनोऽपि विश्वप्रकाशे पठितः। क्ष्माभृद्रिपुं जित्वा; क्ष्माभृत् भगवान् विष्णुः, तस्य रिपुं शत्रुं, भगवद्विद्वेषिण इत्यर्थः; जामदग्न्यमिति च। वैष्णवधर्मः; भागवतधर्मः, वैष्णवधनुश्च। शतानन्दतः; उत्तरोत्तरशतगुणितानन्देन ब्रह्मानन्देनेत्यर्थः; शतानन्दनामकजनकपुरोहितेनेति च। विश्वैः अमित्रवरैः प्रतिवादिभिः अप्रकम्प्यवैदुष्यविभवः, विश्वामित्रात् मुनेः लब्धैः वरैः अप्रकम्प्यविभव इति च। श्रीरङ्गनाथाश्रयः; श्रीरङ्गनाथं शरणत्वेनाश्रित इति उभयत्र समानम्। दाशरथेः श्रीरङ्गनाथाराधकत्वं श्रीमद्रामायणादिषु प्रसिद्धं संप्रदायावगतम्।

२०. आरण्यकैः; उपनिषद्भागैः, अरण्ये जातैर्मनुष्यैश्च। "अरण्यान्मनुष्ये" इति वुञ्। वाक्चेतसोरपि सुदुर्ग्रहम्; "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति अवाङ्मनसगोचरतया श्रुतम्; औषधमपि अवाङ्मनसविषयशक्तियुक्तम्। यामुनः यामुनाचार्यनामा आचार्यवर्यः; स्तोत्ररत्नाख्येन ग्रन्थेन यः भगवद्गुणान् सर्वानपाययदित्यर्थः।

२१. चोलाधिपत्नी; चोलराजमहिषी। अयमत्रत्यकथासंग्रहः— यामुनाचार्यस्य कदाचित् चोलराजसदसि तत्सभापण्डितेन सह वादः प्रवृत्तः। तदा विजयिनं यामुनाचार्यं राजमहिषी स्वप्रतिज्ञापूरणसंतुष्टा 'मां पालयितुं किमागतोऽसि' इति स्तुत्वा नमस्कृत्य बहुमेने इति। 'रूढिर्योगापहारिणी' इति सामान्यतो योगात् रूढेर्बलीयस्त्वं लोके प्रसिद्धम्। एतद्विषये तु विपरीतमिदं जातमिति भावः।

२२. विश्वंभरस्य भगवतः। आशावली अभिलाषपरंपरा। महापूर्णताम्; संपूर्णताम्, महापूर्ण इति आचार्यविशेषस्य नाम।

२३. अग्र्यभाषेत्यादि; अग्र्यभाषा श्रुतिः सैव योषा योषित् तस्याः ग्रैवेयभूषायिता ग्रीवालंकारभूतमङ्गलसूत्रायिता शुभभणितिः यस्य सः। अस्याचार्यस्य सूक्तिभिरेव श्रुतिः मङ्गलसूत्रवती पतिवत्नी जाता। अस्याचार्यस्य सूक्तीनामभावे भगवान् पुरुषोत्तम. श्रुतिप्रतिपाद्यो न स्यादित्यर्थः।

२४. मुक्तौघैः; मुक्तानां समूहैः। वैष्णवपदम्; परमपदम्। याम्यनगरीत्यादि; अस्मिन्नाचार्येऽवतीर्णे अमुमाश्रिताः सर्वेऽपि मुक्तिमार्गं प्राप्ताः। अतो यमनगर्याः कवाटं संघटितमेवाभूदित्यर्थः।

२५. सिता शर्करा। कुदृशाम्; दुर्मतानाम्, अक्षिरोगवतां च।

२६. यथा त्रिवेण्यां सरस्वतीयमुनाविष्णुपदीनां संभेदो भवति तथा लक्ष्मणकृत्यामपि सरस्वत्युल्लासः यामुनप्रबन्धैरुच्छ्रायः विष्णुपदसंबन्धश्च भवतीत्यर्थः।

२७. अष्टाक्षर्याः अष्टाक्षरमन्त्रस्य। सकलवर्णानुगुणता न भवति; वैदिकमन्त्रत्वेन त्रैवर्णिकेतरशूद्रादीनामनुपादेयता। रामानुजाख्यचतुरक्षरमन्त्रस्तु सकलवर्णानुगुणः, अत एव भूम्ना गुरुश्च भवति।

२८. विशुद्धपक्षौ; सितच्छदौ, निर्दुष्टमतौ च। श्रुतिहृद्यसूक्ती; श्रुत्या वेदप्रमाणेन विदुषां मनोहरवचनौ; श्रुतेः श्रवणस्य हृद्या सूक्तिः विरावः ययोस्तौ इति च। मानसम्; मन एव मानसं सरश्च। देशिकराजहंसौ; आचर्यवरौ कूरेशदाशरथ्याख्यौ।

२९. श्रुतिः; वेदः श्रोत्रं च। सुवर्णानाम्; शोभनाक्षरवतां, स्वर्णमयानां च। विलेखो यत्कृतः; श्रीरामानुजग्रन्थाः पूर्वं कूरेशेन पत्रे लिखिता इति प्रसिद्धिः।

३०. उद्धृहेत्यादि; दाशरथिनामक आचार्यः श्रीरामानुजस्य स्वस्रीयः वाधूलवंश्यश्च। श्रीरङ्गप्रभुकनकवेलं धृतवते; श्रीरङ्गनाथ-देवालये प्रधानाधिकृतः। अयं वृत्तान्तोऽत्र ग्रन्थे दशमस्तबके वक्ष्यते।

३१. सरसिजदृशम्; पद्मनयनां पत्नीम्। भोक्तुमनुभोक्तुमे-कान्तं विजनप्रदेशमपश्यन्। यतः सर्वान्तर्यामितया सर्वव्यापितया च भगवान् पुण्डरीकाक्षः सर्वत्र वसति, अतो विजनप्रदेशमलभमान इत्यर्थः। भ्रमरघुणनीत्या; भ्रमरकीटन्यायेन, यथा भ्रमरः कीटविशेषं सदा स्वसंपर्केण स्वचिन्तामुत्पाद्य क्रमेण भ्रमरात्मना परिणमयति तद्वत् सदा श्रीरामानुजध्यानात् गोविन्दोऽपि तुर्याश्रमं स्वीकृत्य श्रीरामानुजसंज्ञां दधारेत्यर्थः।

३२. रङ्गक्षितिरमणतद्दारयिनुतिम्; श्रीरङ्गनाथरङ्गनायिकाविषयं श्रीरङ्गराजस्तवश्रीगुणरत्नकोशनामकं स्तोत्रद्वयम्। भट्टार्यः पराशर-भट्टार्यः।

३३. भगवच्छ्रीगुणमणीन्; भगवतः श्रियश्च गुणानेव मणीन् पूर्वोक्तस्तोत्रद्वये सुघटितान्।

३४. मृषावादः; ब्रह्मातिरिक्तं सर्वं मिथ्येति वादः, श्रीशङ्क-राद्वैतमतमित्यर्थः। वेदान्तवाक्यामृतेत्यादि; मृषावादकान्तारे वेदा-न्त्याख्यस्य दन्तिनः पातुं जलमपि दुर्लभमासीत्, सगुणपरवेदान्त-वाक्यानाम् अपारमार्थिककल्पितगुणपरत्वाङ्गीकारेण वेदान्तवाक्येषु न किमप्यास्वादनीयमासीत्। श्रीरामानुजमतप्रवेशानन्तरं तत्र सुधास्वादोऽभूदिति यावत्।

३५. वंशः; अन्वयो वेणुश्च। वेणुषु मणयो विद्यन्त इति कवि-समयप्रसिद्धिः। सन्मार्गः; साधुमार्गः नक्षत्रमार्ग आकाशं च। द्विजवराः; ब्राह्मणोत्तमाः पक्षिश्रेष्ठाश्च। क्ष्माभृतः; पर्वताः संयमिनश्च।

३६. तद्वंशः वाधूलान्वय एव वेणुः। भागिनेयः भगिन्याः पुत्रः। दाशरथ्यार्यनामा; पूर्वं त्रिंशे पद्ये निर्दिष्टः।

३७. यदाख्यां दाशरथ्याख्याम्। श्रीरामानुजपादयुगलमेव दाशरथ्याख्यां बिभ्रत् प्रकाशते ; तद्भक्ताग्रेसर इत्यर्थः।

३८. श्रीकृष्णरायः ; विजयनगराधीशः कृष्णदेवरायः। व्याले-त्यादि ; अस्य श्रीरङ्गाचार्यस्य श्रीपादतीर्थसंसर्गेण ब्रह्मरक्षःपीडा निवृत्तेति कथानुसंधेया।

३९. किंधामस्थेमभाजं ; तिरुवेल्लूराख्यक्षेत्रवासिनम्।

४०. आन्वीक्षिकी न्यायशास्त्रम्। फणिरमणः पतञ्जलिः। हीरः रत्नम्।

४१. वीक्षारण्य तिरुवेल्लूराख्यक्षेत्रम्। वीररामः श्रीवीर-राघवस्वामी।

४२ अमुष्य वरदगुरोः। शरणमातृनामा शरणाम्बानामकः।

४३ रघुकुलेत्यादि; यथा रघुकुले श्रीरामादयश्चत्वारो भ्रात-रोऽवातरन् तद्वदित्यर्थः।

४४. श्रीवत्साङ्कः, कूरेशः ; तत्सदृशः। अत्र रामानुजाचार्य-नामा विवक्षितः। श्रुतिशिखरयुगम् ; उपनिषत् द्रमिडोप-निषच्च।

४५. वरदगुरुसमः वात्स्यवरदाचार्यसमः। हेमवल्लीशः ; कनक-वल्लीशः श्रीवीरराघवस्वामी।

४६. तन्मुखात् श्रीमद्रामायणविशेषार्थोपदेशात्। श्रीरामार्य-नामा।

४७ शब्दब्रह्मेत्यादि ; शब्दशास्त्रनिष्णात इत्यर्थः। कमलभवः ब्रह्मा।

४८. वेतण्डभूभृत् , हस्तिगिरिः श्रीकाञ्ची। घोटः अश्वः। तुरगवाहनमिति यावत्। लोकाचार्यः ; तन्नाम्ना प्रसिद्ध आचार्यः ;

तस्य प्रतिष्ठाकरणं तद्बिम्बप्रतिष्ठाकरणम्। तत्समः लोकाचार्यसमः। द्राविडाम्नायो दिव्यप्रबन्धः।

४९. पातञ्जलसूक्तिः महाभाष्यम्।

५०. श्रीशुद्धसत्त्वात् तन्नामकात्।

५१ गुरुपरिषदसेव दृढां नावमवलम्ब्येत्यन्वयः। गुणाः; रज्जवः, धार्मिकत्वादयो गुणाश्च। परमपुरुषानुग्रहमयं माणिक्यम्; अनेन श्रीरामानुजचम्पूप्रणयनस्योद्देश्यं फलं भगवदनुग्रह एव, न प्रतिष्ठादिकमिति ज्ञापितम्।

५४. कविकथकसिंहप्रभृतयः; श्रीमद्वेदान्तदेशिकप्रभृतयः। यतिराजसप्ततिरचनेनोपकारेणात्र तस्य विशिष्य स्मरणम्।

५५. कश्चिन्मूकः श्रीरामानुजानुग्रहात् वाग्मी जात इति वृत्तान्तः सप्तमस्तबके ४७ तमश्लोके व्यक्तः।

५६. विगाह्ये अवगाहयोग्ये। भूमा महिमा। श्वेतगरुतो हंसाः। ह्रीणाः लज्जिताः।

५७. श्रीरामावरजः श्रीकृष्णः। तच्चरिताख्यानचतुरौ व्याससुकौ।

५९. अत्रोत्तरार्धे वेदान्त्याख्ययतिर्विवक्षितः।

६०. व्याख्यामुद्रायाः कण्टकोद्धरणरूपफलोत्प्रेक्षा।

६४. सतामध्वनि; आकाशे। धुरि पुरतः।

६५. श्रीरङ्गामृतकविः; श्रीरामानुजशतकान्तादिरूपद्राविडप्रबन्धनिर्माता तिरुवरङ्गत्तमुदनार् इति प्रसिद्धः। प्रपन्नगायत्री इति तदीयप्रबन्धस्य व्यवहारः।

६६. भवताम्; प्रमादः गुणग्राहिणां भवतां न वैमनस्यमापादयेदित्यर्थः। अत्र दृष्टान्तः कामदमनस्य शशाङ्ककलाधारणम्।

७०. श्रीरङ्गक्षितिरमणकान्ता श्रीरङ्गनायिका ।

(ग) विदीप्राः; प्रकाशमानाः । अकूपारदाराः, नद्यः । विनिद्राः जागरूकाः । मिलिन्दाः भ्रमराः । कुरुविन्दाः रत्नानि । विशिखाः रथ्याः । भोगिनः; सर्पाः भोगवन्तश्च । वनमाला; भगवतो वक्षसि विराजमानो मालाविशेषः । सर्वमङ्गला पार्वती । काञ्चनाभिख्यां; कनकाभिधाम्, कांचन अभिख्यामिति च । विष्णुपदमाकाश, विष्णोः पादारविन्दं च । घनाघनः; वर्षुको मेघः । हाटकपटी पीताम्बरम् । पञ्चमुखो रुद्रः । बर्हिर्मुखाः देवाः । चिरन्तनसरस्वती आम्नायः ।

७३. वास्तव्याः वसन्तः । धाराणां धूः धाराधुरा; "ऋक्पूरब्धूःपथामानक्षे" इति समासान्तोऽकारः ।

७४. धिनोति; प्रीणयति ।

७५. शुभ्रांशुः चन्द्रः । सारिण्यः कुल्याः ।

७६. याः परितः; यस्याः सर्वभागेषु । "अभितःपरितः" इत्यादिना द्वितीया ।

७७. विबुधाः; देवाः विद्वांसश्च । देवराजः; इन्द्रः, वरदराज इति प्रथितो हस्तिगिरीशश्च । जलेशो वरुणः ।

७८. हृत्तापघ्नम्; हृत्तापनाशनीनामकं तिरुवुळ्ळूर्क्षेत्रे विराजमानं सरः ।

७९. कैरविणी; मद्रास्नगर विराजमानबृन्दारण्याभिधक्षेत्रे (तिरुवल्लिक्केणि) विराजमानं सरः । प्रह्लादपार्थप्रियौ; श्रीनृसिंहः पार्थसारथिश्च । पार्थसारथिः प्राङ्मुखः नृसिंहः प्रत्यङ्मुखश्च निवसतः ।

८०. जलशैलः; 'तिरुनीर्मलै' इति प्रसिद्धं क्षेत्रम् ।

८१. महीसारमिति नामकरणे हेतुमाह-अखण्डेत्यादि। अन्ते वसत्, समीपे स्थितम्।

८३. तन्नामधेयेत्यादि; केशव इति नाम्ना प्रथितः। यायजूकतिलकः, यजमानश्रेष्ठः।

८५. इलागीर्वाणचूडामणिः भूसुरश्रेष्ठः। श्रीमत्कैरविणीत्यादि; सकलमपि नित्यनैमित्तकं कर्म भगवदाराधनवेषेणानुष्ठाय कांचिदिष्टिमकरोत्।

(ग) शातकुम्भं सुवर्णम्। दन्धनं दुर्बलम्। निबन्धनं ग्रन्थः। दीपकमृगविन्यासन्यायः; वन्यमृगग्रहणाय व्याधाः मृगमेव वने चारयन्ति; तं मृगं दृष्ट्वा वन्या मृगाः तत्पदवीमनुरुन्धाना व्याधहस्ते निपतन्तीति प्रसिद्धिः।

८६. भाग्योत्तरः उत्कृष्टभाग्यशाली।

(ग) सत्यव्रतं काञ्चीक्षेत्रम्। अनन्तायां भूमौ। सुदर्शनं, सम्यग्दर्शनं विशिष्टाद्वैतदर्शनम्। विनतानामानन्दनचातुरीम् आनन्दजननसामर्थ्यम्। दरः शङ्खः। दरं भयम्। दरमपि ईषदपि। कुमुदं, भूमेः संतोषम्। परमेष्ठिपुत्रीयतः नारदीयतः।

८७. नलवनसमासेचनतुलाम्; वैयर्थ्यमित्यर्थः। नृशेषत्वं, ना चासौ शेषश्च, नररूपी शेष इत्यर्थः; तस्य भावम्।

(ग) चक्षुःश्रवसः सर्पाः। सहासिका सहासनम्।

८८. निधानमिव निधिमिव।

(ग) स्वातीवर्षाम्भः, स्वात्यां शुक्तिपतितं वर्षाम्भः मुक्ता भवन्तीति प्रसिद्धिः। दन्दशूकः सर्पः। प्रश्रयो विनयः।

८९. धुरीणो मुख्यः ।

(ग) अभ्युदयम् आविर्भावम् । अहंयुनि अहंकारवति। शुभंयुनि शुभान्विते । "अहंशुभमोर्युस्" इति युप्रत्ययान्तः । खे आकाशे अटन्तीति खेऽटाः, नक्षत्राणि ।

९०. द्वन्द्वभूमा, लीलाविभूतिः नित्यविभूतिश्चेति विभूतिद्वयवान् ।

९१. पण्डितपुण्डरीकः, पण्डितव्याघ्रः पण्डितश्रेष्ठ इत्यर्थः ।

९२. उद्यद्घृणेः उदितकान्तेः ।

(ग) जेगीयमानः, पुनःपुनर्गीयमानः । सूरसुता यमुना । कमलवासिनी लक्ष्मीः । अन्धयतीत्यन्धं तमः अन्धतमसम् । "अवसमन्धेभ्यस्तमसः" इति समासान्तोऽच्प्रत्ययः । अहमहमिका परस्परस्पर्धा । क्रियासमभिहारेण पुनःपुनः ।

९३. अब्जचक्रोज्वलं, शङ्खचक्रोज्वलं कमलसंघोज्वलं च । सकमलं, लक्ष्मीसहितं कमलसहितं च ।

(ग) सुधाकिरगिरा, अमृतवर्षिण्या वाचा।

९६ क्षीरदेश्यं क्षीरकल्पम् । देवदेशीयः देवकल्पः ।

(ग) अकूपारः समुद्रः ।

९७. महतामाशीःफणितिभिः, आशीर्वचनैः।

---

## अथ द्वितीयस्तवकः ।

---

१. चेतना एव मुक्तामणयः, तान् । पिठरं स्थालीम् ।

३. अनुश्रवो वेदः । फणाधरधुरंधरः शेषः । अलं समर्थः ।

४. विश्वंभराभरम्, उत्तमाङ्गे शिरसि भूमिधारिणम्। अन्तरङ्गे मनसि विश्वंभरं भगवन्तं नारायणमाविश्रान्तं चिन्तयन्तम्।

९. दर्विकराः सर्पाः। नात्र चित्रमित्यन्वयः।

११. परवस्तुपरं, परब्रह्मपरम् उत्कृष्टपदार्थविषयकं च। भूम्याश्चक्रे, भूमण्डल इत्यर्थः।

१३. परं वस्त्वपि। परब्रह्मापि गुणमयं सत्यकामत्वादिगुणप्रचुरम्। विभवभागपि ऐश्वर्यसंपन्नापि। गुणमयं तन्तुमयम्।

१६. कंचिद्बालं धृतवती युवतिरपि केशवार्यपत्नी मन्दां गतिं भेजे; गर्भभरालसा मन्दमन्दां गतिमलभत। श्रुतिस्तु त्रैलोक्यधुरंधरं भगवन्तं धृतवत्यपि किंच जरत्यपि वयोऽधिकापि परमां गतिं भेजे इत्याश्चर्यम्।

(ग) व्रतती लता।

१७. भूदेवीति केशवार्यपत्न्या नाम। तमोमण्डलम्, अन्धकारपरंपराम् अज्ञानसंततिं च।

१८. सिद्धार्थशक्तिग्रहण इत्यादि; वाक्यस्य कार्य एव शक्तिग्रह इति मीमांसकमतं खण्डयित्वा वाक्यस्य सिद्धार्थेऽपि शक्तिग्रहः सुकरः यथा 'पुत्रस्ते जातः' इति वाक्ये इति वेदान्तिनां मतं स्थापयिष्यत्ययं बालक इति मत्वा तुतोषेत्यर्थः।

२०. अभिराध्यति स्म, पूजयामास।

२१. इत्थं कर्तुं पटीयान्; गोवृन्दं वचोवृन्दं श्रुत्या वेदेनाधिकालंकृतम् उद्यत्सुवर्णं च कर्तुं पटीयानित्यर्थः।

२२. बतेत्याश्चर्ये।

(ग) पितामहपितामह इति; श्रीशैलपूर्णे वेंकटाचलपतेरभिषेकतीर्थाहरणकैंकर्यं प्रत्यहं कुर्वाणे सति एकदा वेंकटाचलपतिः स्वयं वृद्धविप्ररूपेण मध्येमार्गमागत्य तृषार्त इव 'तात

देहि मे पानीयम्' इति तं ययाचे। श्रीशैलपूर्णोऽपि पानीयप्रदानेन तं तोषयामास। तत आरभ्य श्रीशैलपूर्णस्य 'तातः' अथवा पितामह इति प्रसिद्धिर्जातेति कथा। सर्वलोकपितामहस्यापि वेंकटाचलपतेः पितामह इत्यर्थः।

२५. मेघनादमुखमायिविभङ्गम्; इन्द्रजित्प्रमुखराक्षसनाशम्, मेघस्येव नादो येषां तानि मुखानि येषां तेषां मायिनां मायावादिनां पराजयमिति च।

२६. द्वयपरिमलं द्वयाख्यमन्त्ररत्नसौरभम्।

२७ आराधनोचितम्; भगवता प्राणिनां हस्तपादादिका अवयवाः स्वाराधनाय प्रत्ता इति भावः। "अचिद्विशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा। करणकलेवरयोगं वितरसि वृषशैलनाथकरुणे त्वम्॥" इत्याचार्यसूक्तिरिहानुसंधेया।

२८ (ग) कुहनाभीरडिम्भः, कपटगोपबालकः श्रीकृष्ण इत्यर्थः। बन्धूनां समूहो बन्धुता।

३२. मोदकम्, भक्ष्यविशेषः संतोषकरं च।

३३. एते श्रवणे। तस्य शेषस्य अनर्घाणि यानि रत्नानि तानि भजेते इत्यर्थः।

३४. ललन्तिका, लम्बमानः पदकाख्य आभरणविशेषः।

३६. अधिकाञ्चि; काञ्च्यामधिकाञ्चि इति विभक्त्यर्थे अव्ययीभावः। श्रुतीनां, श्रवणानां वेदानां च।

३८. चिलकं विशेषकम्।

४०. श्रुतीत्यादि; श्रुत्या एव युवत्याः कण्ठे मुक्तासरमिव भासमानम्।

४३. द्वयेति; द्वयाख्यो मन्त्रविशेषः।

४७. रसावकाशे भूप्रदेशे।

४८. रिङ्खणानि संचारान् ।

५२. विवक्षति, वक्तुमिच्छति सति । मुनिः मौनवान् ।

५९. अशेषामुपनिषदं वरगुणं ब्रह्मोपनेतुं ब्रह्म पापयितुम्; ब्रह्मप्रतिपादिकां कर्तुमित्यर्थः ।

६०. सब्रह्म, समन्त्रकमित्यर्थः । ब्रह्मोपदेशं, परब्रह्मोपदेशं गायत्रीमन्त्रोपदेशं च ।

६१. शिरसि विद्यमानेन मणिना विभूषिताम् । शिरसि उपनिषद्भागे यो मणिरिव अलंकारभूतो भगवान् तेन विभूषिताम् । विलसितैरङ्गैः, करचरणादिभिः शिक्षाव्याकरणादिभिश्च संभाविताम् । पदयोः यः क्रमः विक्षेपः तेन मनोरमाम्; हंसगामिनीमित्यर्थः । पदं क्रमः जटा घनमिति प्रसिद्धेषु चतुर्षु वेदपारायणेषु पदक्रमाभ्यां मनोरमामित्यर्थः । सुवर्णेन कनकेनालंकृताम्; शोभनैर्वर्णैरक्षरैः शोभितामिति च । द्विजवरः, चन्द्रः, स इव आननं मुखं तेनोद्भासिनीम् । द्विजवराः ब्राह्मणश्रेष्ठाः, तेषामाननेषूद्भासिनीम्; तैः पठितामित्यर्थः ।

(ग) धिषणो बृहस्पतिः । धिषणा मेधा ।

६२. मधूलिः मधुश्रेणिः ।

६४. अलंकृतीः उपमाद्यलंकारान् । प्रसाधयन् अलंकुर्वन् ।

६५. लज्जया नमन्मुखः गुरुः 'अयं गौतमः किम्' इति संदिहानः अस्य पादयोरक्षि विद्यते किमिति वीक्षमाण इव बभासे इत्यर्थः ।

६६. स्वकीयभाष्यम्; महाभाष्यम् ।

६७. दुर्निबन्धनं, दुष्टं निबन्धनाख्यं ग्रन्थविशेषम् । सेश्वरां प्रसाध्य; जैमिनिसूत्राणि न निरीश्वरपराणि, किंतु सेश्वरपराणीति साधयित्वेत्यर्थः । गुरोः प्रभाकरस्य ।

६८. अक्षचरणव्याहारः, अक्षपादशास्त्रं न्यायशास्त्रम् ।

भोगीन्द्रवाक् व्याकरणशास्त्रम्। यशोजालेन जगति धवलीभूते शुक्लपक्षकृष्णपक्षविवेक एव नासीदित्यर्थः।

(ग) कुमारः सुब्रह्मण्यः। शातोदरी वनिता। विबुधोत्तमः, देवेन्द्रः विद्वद्वरश्च। सदा अलीनां भ्रमराणां श्रेयसः योक्ता, सतामालीनां साधुबृन्दानामिति च। शतकोटिः वज्रायुधम्। शतसंख्याकाः कोटयश्च। उज्वलतटिल्लतिकं च तत् मञ्जुलं चेति कर्मधारयः। तमीकान्तः चन्द्रः। द्विजराजयो दन्तपङ्क्तयः। कम्बुबन्धुरः, शङ्ख इव सुन्दरः। धवलाङ्गविहङ्गाः हंसपक्षिणः। अर्णोजानि कमलानि, तेषां बान्धवः सूर्यः।

६९. सतां पथि; सत्पुरुषाणां मार्गे, नक्षत्राणां मार्गे आकाशे इति च। द्विजवल्लभः, ब्राह्मणश्रेष्ठः चन्द्रश्च। कुवलयं, भूमण्डलं कुवलयपुष्पं च। धवलपक्षः शुक्लपक्षः। कलानां विद्यानां निधिः, षोडशकलानां निधिरिति च।

---

अथ तृतीयः स्तबकः।

श्लो. १. सरस्वत्याः वाचः संबन्धि अमृतम्; सरस्वतः समुद्रात् जातममृतं च। सतां साधूनां मण्डलं, सतां नक्षत्राणां मण्डलं च। तमसः; अज्ञानस्य अन्धकारस्य च। कलाभिः; विद्याभिः, षोडशभिः कलाभिश्च।

३ (ग) ब्राह्मीं विद्याम्; वेदान्तविद्यामित्यर्थः। अह्नाय शीघ्रम्। यादवप्रकाशस्य तन्नामकस्याद्वैतविद्याचार्यस्य। यथोक्तकारीति काञ्च्यां प्रसिद्धेषु अष्टादशसु दिव्यस्थानेषु कस्मिंश्चित् दिव्यदेशे विराजमानस्य भगवतो दिव्यनाम।

४. चिरालापाः वेदाः। दन्तावलगिरेः हस्तिगिरेः।

५. दिवादीपेत्यादि; भगवतो वैकुण्ठवाससमये तदीया दयौदार्यादयो गुणाः विषयाभावात् दिवादीपा इव व्यर्था अभवन्नित्यर्थः।

७. हाटकपटी पीताम्बरम् ।

९. आकण्ठं, संपूर्णमित्यर्थः ।

१०. कमलनयनार्य इति नाम । अनु सह जातं यशो यस्य; सहजयशा इत्यर्थः । गोविन्द इति नाम ।

१२. (ग) शेषस्य विभाषा पर्यायः; तदवतार इत्यर्थः ।

१३. प्राग्भारं समूहम् ।

१५. 'मे माता वन्ध्या' इति वचनं यथा स्ववचनव्याहतं तद्वत् श्रुतिः 'ब्रह्म अवेद्यम्' इति वेदयतीति वचनं व्याहत-मित्यर्थः ।

१६. भेदश्रुतिः अभेदश्रुतिः घटकश्रुतिश्चेति त्रिविधा श्रुतिः ।

१७. बाह्यैरिव, वेदबाह्यैः बौद्धादिभिरिव ।

२३. कर्णपरुषाम्; स्वमतनिरासकतया कर्णकठोराम् ।

(ग) सभायां साधुः सभ्यः । अन्तरादित्यविद्यायाम् "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादिना छान्दोग्यप्रतिपादितायां ब्रह्मविद्यायाम् । कप्यासवाचः; "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यादि-वाक्यस्य । कपेः मर्कटस्य आसं जघनं यथा तथा भगवतोऽक्षिणी इति व्याख्यानं कृतं परैः । बाष्पायमाणे बाष्पमुद्वमन्ती लोचने यस्य । "बाष्पोष्मभ्यामुद्वमने" इति क्यङ् । एवमूष्मायमाणैरित्यपि । उष्णा-लुना; उष्णं न सहते उष्णालुः, तेन । "शीतोष्णतृप्रेभ्यस्तदसहने" इति आलु-प्रत्ययः । हीनोपमानम्; मर्कटजघनेन हीनेनोप-मानकथनम् ।

२४. अतिगभीरेत्यादि; कं जलं, तस्मिन् प्यास्ते वर्तत इति कप्यासम्; अतिगभीरजलप्ररूढमित्यर्थः। अथवा कं जलं पिबतीति कपिः नालं, तस्मिन् आस्ते इति कप्यासम्; सुमृष्ट-नालवर्तीत्यर्थः। आभ्यां विशेषणाभ्यां पुण्डरीकस्याम्लानत्व-प्रयुक्तशोभातिशय उच्यते। अथवा कं जलं पिबतीति कपिः सूर्यः, तेन आस्यते विकास्यत इति कप्यासम्; रविकरविक-सितमित्यर्थः। अनेनापि शोभातिशय उच्यते।

(ग) अनिदम्प्रुदयवाणीशीरः, उपनिषत्।

२५. (ग) कथंताचिन्ता, कथमेष वध्य इति चिन्ता। एवं चिन्तापरोऽपि ब्रह्महत्यापातकात् बिभ्यत्।

२६. मणिकर्णिका नाम गङ्गातीर्थे कश्चन घट्टविशेषः।

(ग) प्रमथसच्छात्रैः; प्रमथगणवत् क्रूरहृदयैरित्यर्थः। उप-चिक्षेप आरेभे।

२७. पिचण्डः कुक्षिः।

२९ शुण्ठी, शुष्कमार्द्रकम्। रामठं हिङ्गु। इड्डुली, अपूपविशेषः दक्षिणदेशे प्रसिद्धः। एवं दोशा अपूपविशेषः। भक्तम् अन्नम्।

३१. असिपलं क्रकचम्। तनयोपमानं यमसादृश्यम्।

३२. आतन्वन् कुर्वन्। शाटकैः, वस्त्रैः।

३३. पदार्पणपटीः; तपनकिरणपरितप्तासु सिकतिलासु भूमिषु गमनसमये पादरक्षार्थं वस्त्रेण पादौ परिवेष्ट्य गच्छन्ति पथिकाः तदर्थं शिष्याः स्वकीयाः कन्थाः गुरवे ददुरित्यर्थः।

३४ (ग) अपन्थानम्; न पन्थाः अपन्थाः, तम्। "पथो विभाषा" इति समासान्तस्य वैकल्पिकत्वादप्रवृत्तिः।

३५. स्फारं विस्तृतम्। इरिणम् ऊषरप्रदेशः।

३६. उस्रैः रश्मिभिः।

३८. गोमुखव्याघ्रात्; गोरिव मुखं यस्य तस्मात् व्याघ्रात्। आपाततो दर्शने साधुरिव प्रतीतात् अन्ततः क्रूरहृदयात् यादवमिश्रादित्यर्थः।

४०. मत्कृते मामुद्दिश्य।

५१. सजानिः, जायया सहितः। "जायाया निङ्" इति निङ्।

५५. जीवनं जलम्।

५७. शालकूपः इति प्रसिद्धः कश्चन कूपविशेषः अद्यापि काञ्च्यां प्रथितो वर्तते।

६२. जम्भारातिदिशा, प्राची दिक्।

६३. द्विजवराः, ब्राह्मणोत्तमाः पक्षिश्रेष्ठाश्च। पक्षिणो हि स्वयूथपरिभ्रष्टं चिरादागतं पक्षिणं लब्ध्वा वृक्षाग्रमारुह्य रुवन्तीति प्रसिद्धिः। आगमशेखरः वेदान्तः। अगमशेखरः वृक्षाग्रम्।

६४. मघोनः इयं माघवनी।

६५. पुण्यकोटिरिति श्रीकाञ्च्यां भगवन्मन्दिरविमानस्य नाम।

६६. काञ्चीपूर्ण इति कस्यचित् विख्यातस्य भक्ताग्रेसरस्य नाम। सन्धां प्रतिज्ञाम्।

६८. जलजः मत्स्यः। स्वस्य स्वकीयधनस्य वेदाख्यस्य लब्धये।

६९. मन्थानभूमिभृतः मन्दराद्रेराधार इत्यन्वयः। देशिकक्षितिभृतः, देशिकराजस्य। सुमनसां विदुषां देवानां च।

७०. पोत्रं वराहमुखाग्रम्। पोत्रिणां चक्रवर्ती, आदिवराहो भगवान्।

७१. दन्तित्राणत्वरातः; नक्रमुखपतितगजेन्द्रस्य रक्षणावसरे या त्वरा तया। वाहः वाहनम्।

७६. निराघाटं, निराबाधम्। घोटम्, अश्वम्।

७७. मणीन् जीवाभिख्यान्; कौस्तुभमणेः जीवाधिष्ठातृत्वं शास्त्रसिद्धम्। कथंकारं, कथमित्यर्थः।

७८. सभाजनाः, सभ्या जनाः विद्वांसः।

(ग) लक्ष्मणाख्यं सहजं भ्रातरम्। कमलनयनसूरिसुतं गोविन्दम्।

७९. घनावटे, निबिडगर्ते। सयातने, तीव्रवेदनासहिते। विलक्षणः, बुद्धिकौशलादिभिर्निरुपमः। विचक्षणः, निपुणः।

८०. भूदारो वराहः। व्यालः, सर्पः।

८२. पाटच्चराः, चोराः।

(ग) व्यतिरेकम्, अभावम्; नाशमिति यावत्। खाटतटिनी, देवनदी गङ्गा।

८३. मठाल्या मालिनीम्; मठसमूहरूपमालावतीम्। काश्यां गङ्गातीरे बहूनि मठानि सन्ति, तद्युक्तामित्यर्थः।

८४. क्वचन; मधुरमङ्गलाख्ये भूतपुरीसमीपस्थे ग्रामे इति गुरुपरंपराचरिते उक्तम्।

---

## चतुर्थः स्तबकः।

श्लो. १. अञ्चन्, पूजयन्। काञ्चीरमणं, वरदराजम्। उदूढेत्यादि; श्रीवरदराजस्वामिनः सदा व्यजनवीजनकैंकर्यमाचरन्तम्।

३. केसराङ्कः, श्रीशठकोपयोगी।

४. अलर्कः, कश्चन ओषधिवेशेषः 'तूतुवलै' इति द्राविडभाषायां प्रसिद्धः। तस्य भक्षणेन सत्त्वगुणोऽभिवर्धत इति महतां वचः। आये इव, महति लाभ इव। रामः,

श्रीरामिश्राख्य आचार्यः।

(ग) कल्लोलिनीकान्तः, समुद्रः।

८. (ग) स्वस्यान्ते, समीपे। स्वान्तेवासिनः, शिष्यान्।

९. अनेकधर्माश्रयमित्यादि; सामानाधिकरण्यं नाम भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिरिति शब्दशक्तिविद्भिः निर्णयः कृतः। स च एकस्य धर्मिणः अनेकधर्मवत्त्व एव संगच्छते; न तु निर्धर्मकत्वे इति भावः। एकतागिराम्, अभेदबोधकवाक्यानाम्। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यमखण्डार्थबोधकमित्युक्तिरसंगतेत्यर्थः।

१०. पूर्वार्धे शङ्कराद्वैतविषयम्। उत्तरार्धे भास्कराद्वैतविषयम्।

११. इदं यादवप्रकाशाद्वैतविषयम्।

१२. कुण्ठितश्रुतयः, श्रुतेः बाधवक्तारः, बधिरश्रोत्राश्च।

१३. परित्यक्तब्रह्मसूत्राः, ब्रह्मसूत्राननुगुणमतप्रवर्तकत्वात् ब्रह्मसूत्राणि वैयासिकानि सूत्राणि तैः परित्यक्तानि दत्तजलाञ्जलीनि। अत एव संन्यासाश्रमे तेषां ब्रह्मसूत्रपरित्यागः यज्ञोपवीताधारणं युज्यत इत्यर्थः।

१६. शिरोहस्तम्, पराजयसूचकं शिरसि हस्तनिक्षेपम्।

१७. विबुधेन्द्रजित्, पण्डितवरजित् देवेन्द्रजिच्च।

१९. मातृष्वसुः अपत्यं मातृष्वस्रेयः।

२०. अह्नाय शीघ्रम्।

२२. (ग) मुष्करः पुरुषः। वेदान्तरत्नभूतभगवदपहारनिपुणपुरुषभूते मस्करिणि यादवप्रकाश इत्यर्थः।

२६. देवाधिपव्यजनकिंकरः; श्रीकाञ्चीपूर्णः, तस्य वाक्यं 'रामानुजः एतादृशाङ्गविन्यासवान् एतादृशगुणकः' इत्यादिकम्।

२८. जैवातृकः, चन्द्रः ।

२७. गोपपुरी ; तन्नामकं क्षेत्रं 'तिरुक्कोविलूर्' इति भाषायां प्रसिद्धम् ।

२८. आद्यैत्यादि ; द्राविडवेदप्रवर्तकेषु भगवद्भक्ताग्रेसरेषु सरोमुनिः भूतमुनिः महामुनिरिति विख्यातास्त्रय आद्याः । त एते त्रयोऽपि कदाचित् वर्षपीडिता गोपपुरीमेत्य भगवन्मन्दिरं प्रविष्टाः मन्दिरस्यातिसंकोचेन सर्वेऽपि तिष्ठन्त एवासन् । तदा क्रमेण तेषां परस्परं संमर्दोऽजायत । संमर्दस्यास्य किं कारणमिति ज्ञानदृष्ट्या पश्यन्तस्ते तत्रोपस्थितं भक्तप्रियं भगवन्तं साक्षात्कृत्य तमस्तुवन्निति कथाभिप्रेता । देहलीवल्लभ इति तत्क्षेत्राधीशस्य नाम । वीरनारायणक्षेत्रं श्रीमन्नाथमुनेरवतारस्थलं 'मन्नार्कोविल्' इति भाषायां प्रसिद्धम् ।

३१. पितामहः ; यामुनमुनेः पिता ईश्वरमुनिः, तस्य पिता नाथमुनिरिति यामनमुनेः पितामहो नाथमुनिः ।

३५. कुरुकेशपुरम् ; कुरुकेश इति कश्चिन्नाथमुनिशिष्यः ; तस्य पुरम् । 'कुरुकैकावलप्पन्कोविल्' इति प्रसिद्धम् ।

३६. भार्गवतीर्थम् ; श्रीवीरनारायणपुरे विराजमानः सरो विशेषः । गारुडाश्मलतया, मरकतवल्ल्याख्यया श्रीदेव्या ।

३७. योगानुयोगेच्छया ; योगाभ्यासमधिकृत्य प्रश्नेच्छया ।

३८. इयमत्र कथा विवक्षिता—यामुनमुनिः कुरुकेशं योगनिष्ठितमवगत्य तद्योगभङ्गभिया निःशब्दं कस्मिंश्चित् भित्तिकोणे तस्थौ । तदा कुरुकेशहृदयपुण्डरीकात् भगवान् श्रियः पतिः कुरुकेशस्यांसाववलम्ब्योर्ध्वमुन्नमय्य कन्धरं यामुनमुनिं ददर्श । स्वांसनिपीडनात् योगान्निवृत्तो यदा कुरुकेशश्चक्षुषी उन्मील्यापश्यत् तदा यामुनं पुरोऽवस्थितं ददर्शेति ।

४०. पुष्पकं नास्तीति ; शीघ्रमेव कुरुकेशपुरं गन्तुं पुष्पकविमानं यदि स्यात् तदा शक्यं, तन्नास्तीति अशुचमित्यर्थः ।

४१. मयि अतिप्रणयं प्रथयता ; मदन्तेवासिनेति शेषः ।

(ग) संस्थानं, गृहम् ।

४२. स्थिरवचः, वेदः ।

४३. महाभाष्यदाता, महाभाष्यपाठकः । चीटीं, कांचनपत्रिकाम् । पुरोधसः निरोधं, दशबन्धाख्यकरदानविषयं निर्बन्धम् । रोधोविहीनं, मर्यादातीतम् ।

४४. दशबन्धः, आयस्य दशमो भागः प्रदेय इति समयपूर्वकं परिकल्पितः करः ।

४७. तेन, पुरोधसा । हाटकमयीं, सुवर्णमयीम् ।

४८. मत्प्रावीण्यविशारदा ; मद्वैदुष्यं जानती । मायी, मायावादी ।

५०. यामुनमुद्दिश्य राजपुरोधसोक्तं 'यद्यत् त्वया अस्तीति वा नास्तीति वोच्यते तत्सर्वं पाण्डित्यमहिम्ना अहमन्यथयामि' इति । तदङ्गीकृत्य यामुनेन 'ते माता न वन्ध्या, राजायं सार्वभौमः, राजपत्नी पतिव्रता' इति त्रयो विषया उक्ताः । तेषामन्यथाकरणमनुचितमिति मत्वा तूष्णीं भूते पुरोधसि लौकिकविषये पराजयमभ्युपगच्छति वेदान्तविषयेष्वपि वादं कृत्वा तं पराजितमकरोदित्यर्थः ।

५५. षण्माससेवापरः, षण्मासपर्यन्तमलर्कदानेन मम दर्शनावसरं प्रतीक्षमाणः श्रीराममिश्रो गुरुर्दर्पोन्नावेक्षितः ।

५७. (ग) आहोपुरुषिका, 'अहो मयि तिष्ठति अन्योऽपि पुरुषो भवितुं किं प्रभवेत्' इति योऽयं दर्पः सा आहोपुरुषिका ।

५८. कुञ्चितं संप्रसार्य; यादवप्रकाशमागतं दृष्ट्वा पूर्वं कुञ्चितमपि पादं तदनादरेण संप्रसार्येत्यर्थः। गौधेरः, 'उडुम्बु' इति भाषायां प्रसिद्धो जन्तुविशेषः। फणिपेत्यादि; श्रीरङ्गात् वेंकटाचलमुद्दिश्य गन्तॄणां केषांचिन्महतां भागवतानां मधुरान्तकग्रामसरसि पाथेयभुजामुच्छिष्टं यदन्नं तद्भोजनजेन सुकृतेन गौधेरस्त्वमेवं शास्त्रज्ञो विद्वान् जात इति पूर्वजन्मवृत्तान्तमबोधयदित्यर्थः।

५९. मम शिरसि पदाम्भोजे कर्मणी कृत्वेत्यर्थः।

६०. महाश्वत्थं भङ्क्त्वा; ब्रह्मराक्षसपिशाचादीनां पूर्वस्थानं परित्यज्यान्यत्र गमनसमये महावृक्षभञ्जनं स्वभावसिद्धम्।

६३. इभो गजः। चमूरुः, हरिणजातिविशेषः। वारणद्विषः, सिंहस्य।

६५. विशिष्टाद्वैतार्थत्वम्; अद्वैतश्रुतयः न निर्विशेषाद्वैतपराः, किंतु सविशेषाद्वैतपरा इत्यवोचदित्यर्थः।

६७. हीरायिता, रत्नायिता।

६८. यथा कश्चित् पर्वतोपरि विराजमानं शाखानिचितं महीरुहं पुष्पाणां फलानां चाविर्भावमपेक्षमाणो जलैः सिञ्चेत् तथायमाचार्यो देवराजं हस्तिगिरिमस्तकविराजमानं बाहाभिरामं शालाकूपाम्बुनाभिषिञ्चन् परिचचारेत्यर्थः।

---

अथ पञ्चमः स्तबकः।

श्लो. १. विचित्रचरितः, काननान्तरात् किरातवेषमाबिभ्रद्भ्यां दिव्यदम्पतिभ्यां काञ्चीप्रापणादिरूपाश्चर्यवृत्तान्तः।

(ग) उपघ्नः, अन्तिके विद्यमान आश्रयः। कौबेरीं ककुभम्, उत्तरां दिशम्।

२. वेदान्ताविव, संस्कृतद्रमिडोपनिषदाविव। एककण्ठं, परस्पराविसंवादीति क्रियाविशेषणम्।

४. अनादिवाणी, श्रुतिः। माङ्गल्यसूत्रिणीम्, मङ्गलकरब्रह्मसूत्रसहिताम्। स्मृतिशोभिताम्, उपबृंहणभूतस्मृतीतिहासादिसहिताम्।

६. कुवलयहितम्; भूवलयहितम्, कुवलयपुष्पाणां हितम्। सत्पथरतम्; सतां मार्गे रतम्, नक्षत्राणां मार्गे आकाशे रतं च। द्विजेन्द्रं चन्द्रं ब्राह्मणेन्द्रं च। सुमनसां, देवानां विदुषां च। स्वर्भानुः, राहुः। खरः, उग्रः।

८. श्रीखण्डक्षितिजः, चन्दनतरुः। भुजङ्गात्, सर्पात् खलाच। तल्लाभः, श्रीरामानुजगुरुलाभः। श्रीरङ्गैश्वर्यस्य धूः श्रीरङ्गैश्वर्यधुरा; समासान्तोऽकारः।

९. साभ्यनुनयं, सप्रार्थनम्।

(ग) हयमेधः, अश्वमेधयागः।

१०. रम्भाः, कदलीः। भङ्क्त्वा भङ्क्त्वा पुनः, पुनर्भङ्क्त्वेत्यर्थः।

(ग) कनकसरितः, कावेर्याः। आशुशुक्षणिः, अग्निः।

१२. वृक्णः, छिन्नः।

१३. अंहःप्रशमनं, पापशमनम्। शिरसा पदकमलमुनेस्य ऊर्ध्वे धृत्वा वपुः स्पृशेयमित्यन्वयः।

(ग) कलमं, शालिसस्यम्। जम्बालयन्, पङ्किलयन्। शुभाश्रयतया, ध्येयविग्रहतया। त्रयीसारभूतं यत् मन्त्रत्रयम्, अष्टाक्षरद्वयचरमश्लोकाख्यम्।

१८. व्यासफणितिः; व्यासवाक्, ब्रह्मसूत्राणीत्यर्थः। गन्धेभैः; मत्तगजैः, अद्वैत्यादिवादिभिरित्यर्थः। ब्रह्मसूत्राणां समीचीनभावाविष्करणचणं भाष्यं कर्तुं कः प्रभवतीत्यर्थः।

१६. पुराणोत्तमम् ; विष्णुपुराणम् । तन्नाम्ना रतिमियात् ; पराशर इति नाम बिभ्राणः संतोषं जनयेदित्यर्थः ।

१७. भविनां संसारिणाम् । अभिमुखीकारः अभिमुखीकरणम् । अनव्यवचांसि, वेदाः । तदाह्वयधरः, श्रीशठकोपाह्वयधरः ।

१८. अमीभिः, आचार्यैः । पूजायं बहुवचनम् । अयं, कटाक्षः । तुङ्गाः, ऋजवः । तमपि, रामानुजमपि ।

(ग) सुलभो न बभूव; श्रीरङ्गं नेतुं न शक्य इत्यर्थः ।

२१. पञ्चजनता, पञ्चाचार्यता । पञ्चत्वात्, मरणात् । पञ्चभिः संस्कारैः ; शङ्खचक्राङ्कनं, पुण्ड्रधारणं, मन्त्रोपदेशः, यागोपदेशः दास्यनामकरणं चेति पञ्च संस्काराः श्रीवैष्णवसंप्रदायसिद्धाः ।

२२. (ग) बादरायणवाणी, ब्रह्मसूत्राणि । औपनिषदः परमपुरुषः, श्रीमान्नारायणः ।

२९. श्रीघनपूर्णदेशिकमणिम्, श्रीमहापूर्णदेशिकम् ।

३१. संभेदः, संगमः ।

३६. आचार्यपादोऽत्र यामुनाचार्यः ।

३७ शठारातीत्यादि, वकुलपादपमूले ।

४४. गुणं, रज्जुम् । घटकसंगतं, घटसंगतम् ।

४५. अमत्रं, पात्रम् ।

४९. घोटीं, बडबाम् ।

५१. बृंहितं, गजगर्जितम् ।

(ग) शरधिः, समुद्रः । प्रेषं, प्रेषाख्यं मन्त्रविशेषम् ।

५३. निःसाणः, वाद्यविशेषः । धवलगरुतः, हंसाः ।

५८. आर्येत्यादि ; श्रीयामुनमुनेः सकाशे कृतं प्रतिज्ञात्रयम् । त्रयीव ; सत्येति यावत् ।

(ग) क्षितिश्रुतिजन्मनि, वल्मीकजन्मनि ।

६०. संयमिनां नेत्रे नायकाय विधिः अमू नेत्रे नयने प्रादात् । वेदान्तार्थविचारे सहायभूतावेतावित्यर्थः ।

६४. चक्षुः किमिह निवसति; किमक्षचरण एव साक्षादागतः इति संदिदिक्षुरित्यर्थः ।

७१. शुभोपश्रुतिः; 'त्वच्चिन्तितं सम्यक् सम्यक्' इति आकाशवाक्यम् ।

७२. दिनकरेन्धानं, सूर्येण प्रकाशमालम् ।

७६. यतिपतिपदाश्रयणे दृष्टान्तं कलयितुमिव निध्यातुमिव ।

७७. तेन यतिधर्मसारसमुच्चयाख्यो ग्रन्थः सूक्त्या अलंकृतः ।

७९. आधोरणः, हस्तिपकः ।

८०. त्रियुगः, भगवान् नारायणः ।

८३. पाथोजाक्षसरः, पद्मबीजसरः ।

८४. अम्भोधिभिषक्, अम्भोधेर्जातो भिषक् धन्वन्तरिरित्यर्थः ।

८५. सुमनसां, विदुषां पुष्पाणां च ।

---

अथ षष्ठः स्तबकः ।

श्लो. १. तद्विज्ञप्तिकरस्य; विज्ञप्तिकर इति अन्तरङ्गकैंकर्यकर्तुः 'अरैयर्' इति भाषायां प्रसिद्धस्य व्यवहारः । एवं श्रीदेवराजविज्ञप्तिकरस्य मन्दिरं गृहं गत इत्यर्थः । रङ्गेशविज्ञप्तिकृत्; श्रीरङ्गराज इत्याख्यो रङ्गनाथविज्ञप्तिकृत् ।

७. कृपानिधिम्; करुणाकराख्यं श्रीभगवद्दिव्यविग्रहम्। दाशरथ्यार्यः, श्रीरामानुजस्य स्वस्त्रीयो दाशरथिः। तन्मुखतः।

८. देहलीकेलिशैलम्; श्रीगोपपुराख्यं क्षेत्रम्। त्रिमुनिविनुतम्; भूतसरोमहान्मुनिभिः स्तुतम्।

११. ईश्वरं गुरुवरम्; ईश्वरमुनिं नाथमुनेस्तनूजम्।

१२. कुरुकाधीशः; नाथमुनेः शिष्यः कुरुकेशनामा आचार्यः।

१८ विज्ञप्तिकरचोदना, श्रीरङ्गविज्ञप्तिकरस्य नियोगः।

३३. (ग) माद्यन्मनाः, प्रमुदितचित्तः। सेनान्यम्; सेनाधिपतिं विष्वक्सेनम्। मा अन्यमिति छेदः।

३४. यतिक्ष्माभृतं, यतिराजम्।

(ग) बहुकृत्वः, बहुवारान्। क्रियाभ्यावृत्तिगणने कृत्वसुच् प्रत्ययः। शेषापटी; तदाख्यः पट्टखण्डविशेषः, यं भक्तानां शिरसि भगवत्प्रसादचिह्नतया आवेष्ट्य तीर्थतुलस्यादिकं दीयतेइति संप्रदायः। कम्बुकण्ठी प्रमदा; श्रीमहालक्ष्मीरिति यावत्। मेदुरः, संपूर्णः।

३५ आभीर्यो गोप्यः। वाराम्बुजातेक्षणाः, वारनार्यः।

३६. कलयन्, पश्यन्। वगाहे, अवगाहे; भागुरिमतेनावेत्यत्राकारस्य लोपः।

३७ प्रतोल्यो वीथयः। मुखरयति; मुखरं शब्दवन्तं करोति।

३८. कलयति, करोति। उज्जिहीते, ऊर्ध्वं प्रसरति।

(ग) विशङ्कटं निबिडम् । विशिखाः, वीथयः । लोकानामालोको वीक्षणम् । श्रीरङ्गभूकमनः, श्रीरङ्गनाथः ।

३९. वेदान्तोदितेति ; "सर्वगन्धः सर्वरसः" इत्यादिनोक्तम् । केशानां समूहः कैश्यम् ।

४०. नीलाख्या भगन्महिषी ।

४१. हेतीशः सुदर्शनः । अस्तावीत्, तुष्टाव "स्तुसुधूञ्भ्यः परस्मैपदेषु" इतीडागमः ।

४२. वीरेन्दिरा ; जयलक्ष्मीः ।

४३. भद्रपीठमिवाचरति ; भद्रपीठति, आचारे क्विप् । कल्लोलिनीवल्लभः समुद्रः । मण्डलमिवाचरति मण्डलीयति; आचारे क्यच् । एवं प्रवालीयतीत्यपि । स्तबकति, चक्रति, सूर्यति इति क्विपि रूपाणि ।

(ग) मिलिन्दाः, भ्रमराः । क्षमा, भूदेवी । कायमानम् ; वस्त्रनिर्मितं गृहम् । अन्तरारामम् ; मध्ये उद्यानसहितम् । जनानां समूहो जनता । बर्हिर्मुखाः, देवाः । शेमुषी, बुद्धिः ।

४५. सिता शर्करा । प्रह्लादयतीति प्रह्लादं, संतोषजनकम् ।

४७. श्रीमान् प्रत्यक्षदृश्यलक्ष्मीविशिष्टः ।

(ग) चान्द्रमस्याः सरस्याः, चन्द्रपुष्करिण्याः ।

४८. जैवातृकः, चन्द्रः । चन्द्रावगाहे, चन्द्रकृतस्नाने ।

४९. शाखासहस्रं, वेदशाखासहस्रम् ।

५१. जलरुहदृशः, पुण्डरीकाक्षस्य भगवतः । धरासिन्धुसुतयोः, श्रीदेवीभूदेव्योः ।

५४. दशाः, वर्तिकाः अवस्थाश्च । स्नेहः ; तैलं, भक्तिरूपापन्नं प्रेम च । आलोकः ; प्रकाशः, ज्ञानं च । लोकानामान्तरं यत्तिमिरम् अज्ञानम् । लोकान्तरे लोकमध्ये स्थितं यत् तिमिरं तमः ।

५६. केसरभूषणः, श्रीशठकोपमुनिः ।

५७. हेमाम्भोरुहं माधवीकुसुमं रक्तोत्पलं चेति भूतसरोमहामुनीनामुत्पत्तिस्थानानि । श्रीदेहलीशः, गोपपुराधिपो भगवान् ।

५८. त्रिभिः श्लोकैः त्रयाणामादिमुनीनामुत्पत्तिस्थानान्याह । पृथिवीं दीपपालं भानुमन्तं दीपं च कृत्वा आन्तरमज्ञानं व्यपोह्य भगवन्तं साक्षाच्चकारेति प्रसिद्धिः । काञ्च्यां, काञ्चीक्षेत्रे । कासारनामा, 'पोय्कै' इति नाम्ना प्रसिद्धः ।

५९ माधवीकुसुमं, जातीपुष्पम् । मल्लाभिधाने पुरे ; महामल्लपुरे, महाबलिपुरमिति प्रसिद्धे । माधवीं भक्तिं, माधव विषयिणीं भक्तिम् । भूताख्याभृत्, 'पूतत्ताल्वार्' इति नाम्ना प्रसिद्धः । भगवतः कौमोदक्याः गदाया अवतारभूतः ।

६०. मयूरनगरी, 'मयिलापूर्' नगरम् । शोणात्, रक्तात् उत्पलादित्यर्थः । कनत्, प्रकाशमानम् । नन्दकः भगवतः खड्गः । वचसां नन्दकं, वेदानां संतोषकरम् ।

६१. चरणोद्भवेन ; अक्ष्णेति वचनविपरिणामेनान्वयः । भवं, रुद्रम् । अत्रायं वृत्तान्तः गुरुपरंपरातो ज्ञायते– भृगुमहर्षेः पुत्रत्वेन जातोऽयं केनचित् व्याधेन परिपोषितः योगाभ्यासनिरतोऽभूत् । तदा आकाशमार्गेणोमापतौ गच्छति तच्छायायाः भूमिपतितायाः स्वसंबन्धं परिजिहीर्षुरयं कानिचित्पदानि अपचक्राम । तत् दृष्ट्वा महनीयस्यात्मनः छायायाः स्पर्शोऽनुचित इति मत्वा तेनापक्रान्तमिति मत्वा तस्मिन् प्रसन्नः

उमापतिः तन्निकटमेत्य 'किं तेऽपेक्षितम् ? तद्ददामि ; वरं वृणु' इति तं पप्रच्छ । 'मोक्ष एवात्मनोऽभीष्टः ; तं दातुं प्रभवसि चेत् प्रयच्छ' इति ऋषिणोक्ते 'मोक्षप्रदाने भगवान्नारायण एव प्रभवति ; मोक्षं विनान्यत् यदभीष्टं तत् वृणु' इति रुद्रेणोक्तम् । ततः ऋषिः 'यद्येवं सूचिः येन मार्गेण गच्छति तेनैव मार्गेण तन्निबद्धा तन्तुरपि गच्छतु' इति वरं ययाचे । तदेतदवहेलनं मत्वा रुद्रः कुपितः स्वकीयं तृतीयं लोचनमुद्घाटय तं दग्धुमारेभे । ततः ऋषिरपि स्वकीयचरणे गूढं विद्यमानं चक्षुरुन्मील्य तं प्रतिदग्धुमारेभे । ततो रुद्रः निगृहीतकोपः तं प्रसाद्य कैलासं जगामेति । मुक्तोज्झितदुर्मतम् ; मुनिरयं लोकायतसौगतादिषु मतेषु चिरम् अभिनिविष्टः तत्रासारतां बुद्ध्वा श्रीवैष्णवं मतमवललम्बे इति प्रसिद्धिः ।

६२. घटायां, तुलायाम् । प्रणमनपरोऽप्यस्य हि तथा ; कवीनां सारोऽभूदित्यर्थः । कणिकृष्णाख्योऽस्य शिष्यः कश्चित् वश्यवाक् अभूदिति गुरुपरंपरासंप्रदायादवगम्यते ।

६३. श्रीकान्तेत्यादि ; "पद्भ्यां शूद्रोऽजायत" इति श्रुत्युक्तरीत्या शूद्रजातिः । केसराङ्कं, वकुलभूषणं श्रीशठकोपमुनिम् ।

६४. मधुराभिधानकवये ; मधुरकविनामकशिष्याय । साक्षात्कृत्येत्यनेन संस्कृतवेद इव द्राविडवेदोऽपि अनादिः । शठकोपमुनिस्तु कठादिरिव तस्य द्रष्टैवेत्यभिसंहितम् । सर्वजनतासाधारणीम् ; संस्कृतवेदः त्रैवर्णिकमात्राधिकारिकः । अयं तु सर्वाधिकारिक इति विशेषः ।

६५. अयमत्र विवक्षितो वृत्तान्तः—कुलशेखरमुनिः स्वयं राजा सन् भृशं श्रीरामगुणानुसन्धानपरोऽभवत् । एकदा "चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । एको रामश्च धर्मात्मा कथं युद्धं भविष्यति ॥" इति श्रीमद्रामायणश्लोकं

पठन् रामस्य सहायं कर्तुमिच्छन् सद्यः स्वयं सकलसैन्यसमेतो वनाय प्रतस्थे । ततो मन्त्रिणोऽस्य भक्तेः परां काष्ठां विचिन्त्य सद्य एव श्रीरामस्य विजयावेदकं "तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् । बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥" इति श्लोकमुच्चैः पेठुः । तच्छ्रुत्वा श्रीरामविजयसंतुष्टः कुलशेखरमुनिः सद्य एव राज्यं प्रत्याययाविति ।

६७. किणश्यामिकामिति; भगवतः श्रीतुलस्यारामपोषणार्थं खनित्रपिटकादिधरणेन जातस्य किणस्य श्यामवर्णमित्यर्थः । विद्याशुल्कमिति; वल्लभदेवाख्यस्य पाण्ड्यनृपतेः सदसि सकलविदुषां पुरस्तात् "विष्णुरेव परं तत्त्वम्" इति परतत्त्वनिर्णयं कृत्वा तदर्थं कल्पितं पणबन्धमपि लब्ध्वा राज्ञा विद्वद्भिश्च संमानितोऽभूदिति कथा । रङ्गेन्द्रश्वशुरः; अस्य सुता गोदादेवी श्रीरङ्गेश्वरेण भगवता परिणीता । अतोऽयं श्रीरङ्गनाथस्य श्वशुरः ।

६८. मदावलगतो मल्लद्विषं वर्धयन्; राजसदसि विजेतारं सन्तुं विष्णुचित्तं गजस्कन्धमारोप्य संमानयामास पाण्ड्यराजः । तदा तमिमं महोत्सवं द्रष्टुं गरुडारूढः श्रीमान्नारायण आकाशे आविर्भूय ददृशे । तदा भक्ताग्रेसरोऽयं दिव्यदंपत्योः मङ्गलगीतानि पपाठेति कथा । मल्लद्विषम्; मल्लनिहन्तारं श्रीकृष्णम् ।

६९. पुष्पंधयो भ्रमरः । सूरीन्द्रैर्दशभिः, दशसंख्याकैः भक्तमुनिभिः । शेषाद्रीश्वरदुर्लभम्; दशभिः भक्तमुनिभिः गाथारूपस्तोत्रकरणं श्रीरङ्गनाथस्यैव; वेंकटचलपतेरपि तत् दुर्लभमित्यर्थः । श्रीरङ्गेन्द्रेत्यादि; भगवत्प्रेरणया कस्याश्चित् वेश्यायाः प्रीणनाय श्रीरङ्गनाथदेवालयात् सुवर्णपात्रमेकमनेनापहृतम् । अनन्तरं देवालयाधिकारिभिश्चोरोऽयमिति कृत्वा अमुं दण्डयितुं प्रयत्ने कृते श्रीरङ्गनाथः स्वयमेवाविर्भूय 'मम प्रेरणयै-

वानेनैतत् कृतम्। तस्मान्नायमपराधी' इत्युक्त्वा विमोचित इति कथा।

७१. वासपुरम्; श्रीरङ्गक्षेत्रसमीपे विद्यमानो ग्रामः 'उरैयूर्' इति आधुना व्यवह्रियमाणः। केदारभूसंभवम्; केदारभुवो विनिर्गतम्, अयोनिजमित्यर्थः। भगवतः श्रीवत्सस्यांशतया नीलवर्णदेहम्। इयमत्र कथा—केदारादुत्पन्नोऽयम् अयोनिजः भक्तशिशुः अनपत्येन केनचिच्चण्डालेन भगवद्भक्तेन गृहीत्वा पोषितः। यदायं भक्तः प्राप्तवयस्कः तदा प्राकृतविषय-विरक्तः भगवद्ध्यानैकपरः आत्मानं चण्डलजातीयं भावयन् पुण्यतमं श्रीरङ्गक्षेत्रमनासाद्य कावेरीतीर एव वर्तमानो भगवन्तं ध्यायन्नास्त। एकदा लोकासारङ्गमुनिर्नाम कश्चिद् ब्राह्मणभक्तः तं चण्डाल इति कृत्वा अधिचिक्षेप। तदा भगवता कुपितेन सः लोकसारङ्गमुनिः तं भक्तं स्वास्थान-मानेतुमाज्ञप्तः यदा स भक्तः श्रीरङ्गक्षेत्रं स्वपदा अस्प्रष्टव्य-माचष्ट तदा स मुनिः तं भक्तं स्वस्कन्धे समारोप्यानिनाय। अनन्तरं भगवता परितुष्टेन तस्य भक्तस्योत्पत्तिरहस्यमव-बोधिताः सर्वेऽपि विसिष्मियुः। भक्तश्च सद्यः ज्योतीरूपेण भगवति लयं गतः इति। स भक्तः 'तिरुप्पाणमुनिः' इति कथ्यते।

७३. सुवर्णबुद्धहरणः; सुवर्णमयं बुद्धविग्रहमपहृत्य तं विलाप्य तल्लब्धेन द्रव्येण श्रीरङ्गे गोपुरप्राकारादिकमनेन निर्मितमिति प्रथा।

७४. परकालनामा भक्ताग्रेसरः। 'तिरुमङ्गैमुनिः' इति प्रसिद्धः।

७५. प्राचार्यः, श्रीयामानुचार्यः।

७६. कुप्यदित्यादि; अमृताहरणसमये इन्द्रेण गरुडस्य युद्धं प्रवृत्तम्। तदा इन्द्रस्य कुलिशमस्मिन् कुण्ठितमभूत्।

७७. त्रिधा ; वेदरूपत्वात् ब्राह्मणत्वम् ; अमृतकरत्वात् चन्द्रत्वम् । पक्षवत्त्वात् पक्षिराजत्वमित्यर्थः ।

८०. विषयेभ्य एवाहिभ्य इत्यन्वयः ।

८१. रजनिचरनाथानुजनुषा ; विभीषणेन । रामपट्टाभिषेकानन्तरं श्रीरामेण श्रीरङ्गनाथावासभूतं श्रीरङ्गविमानं विभीषणाय दत्तम् । तेन कावेर्योर्मध्ये प्रतिष्ठापितमिति संप्रदायः ।

८३. सैन्यरमणो विष्वक्सेनः ।

८४. विमानाग्रे परवासुदेवनाम्ना तिष्ठन् भगवान् संदृष्ट इत्यर्थः ।

८५. पत्रम्, वाहनम् । अनयत् ; भगवान् श्रीरङ्गनाथ इति शेषः ।

८९. यामुनमुनेः पद्यैः, स्तोत्ररत्नादिभिः ।

(ग) डिण्डीरः, फेनः । आहिण्डमानं, प्राप्नुवानम् । निर्निद्राणि, विकसितानि । अन्तरीपं, द्वीपम् । मुदिराः, मेघाः । अनेकधा किंकुर्गणम् ; "निवासशय्यासनपादुकांशुकोपधानवर्षातप - वारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्यते जनैः ॥" इत्युक्तरीत्या बहुभिः प्रकारैरुपचरन्तम् । स्वावतारेति ; श्रीरामानुजः शेषावतार इति भावः । पाशायुधः, वरुणः । वरोपयन्ता, सुन्दरजामाता उत्सवविग्रहः । कम्बुः, शङ्खः । निराधारंसंचारः, निराबाधः संचारः ।

९१. चेतोजन्मप्रतिभटः ; कामशत्रुः रुद्रः ।

१००. वासनगरी ; उरैयूरग्रामः ।

१०१. डिल्लीनाथस्येत्यादि; रामप्रियो रङ्गनाथ इति भावः।

१०३. सेवां कलयतो बाल इत्यन्वयः।

१०४. घनपूर्णः; महापूर्ण इत्यर्थः।

१०५. केसराङ्कः; श्रीशठकोपमुनिः।

१०६. अध्यक्षं पुरतः।

१०८. प्रतिष्ठाभ्याम्; व्यवस्थया कीर्त्या चेत्यर्थः।

११०. श्रीयामुनेत्यादि; सिद्धित्रयागमप्रामाण्यादिकम्।

१११. दिव्यप्रबन्धावलिः, दिव्यप्रबन्ध इति द्राविडवेदनाम।

११३. गीतान्तिमार्थम्; श्रीभगवद्गीतायाः चरमश्लोकस्यार्थम्।

११४. शृङ्गाटकं चतुष्पथम्।

११५. आचार्यवाक्यमित्यादि; अत्र "ममैव मरणं भूयान्मा भूद्वंशविनाशनम्। इति बुध्या विनिश्चित्य राघवाय न्यवेदयत्॥" इति रामशासनलङ्घिलक्ष्मणाचारोऽप्यनुसंधेयः।

११६. नाथः, नाथमुनिः।

११७. चरमार्थम्, चरमश्लोकार्थम्। विज्ञसिकृत्पुंगवः; श्रीरङ्गेशसंनिधाने दिव्यप्रबन्धादिपठने वन्दिभूतः अन्तरङ्गकिंकरः।

११८. माल्यधरात्; मालाधराख्यात् आचार्यात्।

१२०. गाङ्गेयतरङ्गिणी; कनकसरित् कावेरी, तस्याः विभजनपर्यन्तमित्यर्थः।

१२१. शाला, रथ्या। परीवाहः, कुल्या। शफरिका, मत्स्यविशेषः; तासामुत्पततां छायाभिः तरणिः स्थगित इति भावः।

१२२. स्फारा, वितता। स्यन्दनपालिका, रथपङ्क्तिः।

१२३ डिण्डीमः, फेनः ।

१२४ मधुपः; भ्रमरः, मद्यपश्च ।

१२७. मधूकभूरुहाः; मधूकवृक्षाः, येषां पुष्पाणि पाण्डराणि भवन्ति । पाण्ड्यक्षितीन्द्रा इव; पाण्ड्यराजस्य मुक्ताफलसमृद्धिः प्रसिद्धा ।

१२८. तपः विधत्ते इति उत्प्रेक्षा । तपस्यन् पुरुषः वृष्टिजलेन सिच्यते, आतपेन शोष्यते, वातेन कम्प्यते च ।

१२९ किं तेनामृतकौतुकेन ? अमृतेच्छया क उपयोगः ?

१३०. काञ्चनफलं दाडिमफलम् ।

१३५. चूर्णं, सुधाम् ।

१३९ जम्भलफलं जम्बीरफलम् ।

१४२. सारण्यः कुल्याः ।

१४३. गाङ्गेयकुम्भैः, स्वर्णकुम्भैः ।

१४४. मृषावादिमतवत्; अविद्याख्यभ्रान्तिज्ञानेन प्रपञ्चभ्रान्तिज्ञानमुदेतीति तन्मतम् ।

१४७. कूटाः, शिखराणि । चाम्पेयपुष्पेषु भ्रमरा न लगन्तीति कविसंप्रदायः ।

१४८. केसरभूरुहः, वकुलवृक्षाः ।

१५०. वंशकरीरं वंशाङ्कुरः ।

१५१. उत् ऊर्ध्वं यानमित्यर्थः । वनान्तरं तु लक्षणया लक्ष्यमिति ज्ञानं भवति ।

१५३. अखण्डा कावेरी; दक्षिणकावेरी उत्तरकावेरीति कावेरी द्विधा भिद्यते । एतादृशभेदात्पूर्वं प्रवहन्ती कावेरी अखण्डकावेरी ।

१५४. भक्तम्; अन्नम्।

१५५. दिवान्धाः, घूकाः।

१५८. सुधा; लेपनद्रव्यम्, अमृतं च।

१५९. कलिद्विट्, तन्नामकः आचार्यः परकाल इति प्रसिद्धः।

१६१. धरायां भूमौ इद्धा प्रकाशमाना।

(ग) दाशार्हो विष्णुः।

१६८. क्ष्माश्रुतिजनिर्मुनिः, वाल्मीकिर्मुनिः।

१७०. शकटविघटनापाटवम्; शकटासुरभञ्जनसामर्थ्यम्। मायाजनन्याः, पूतनायाः।

१७३. हरिं सिंहम्।

१७५. मोहशास्त्रेति; "त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय" इति भगवदादेशात् कृतानि मोहशास्त्राणि वृथा भवेयुरित्यर्थः।

१८१. आत्मघटना, आत्मसिद्धिः। मानोज्झितत्वात्; प्रमाणविरहात्। अप्रामाण्यम्; ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वाङ्गीकारात् वेदगिरामपि मिथ्यात्वेनाप्रामाण्यमित्यर्थः। विशेषसङ्गरहिते; निर्विशेषे वस्तुनि जिज्ञासा नोदेतीत्यर्थः। ब्रह्मोक्तेरिति; "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यस्थपदानां लक्षणा न युज्यते।

१८२. तथा, न जीवतीत्यर्थः। प्रत्यक्षादिविरोधतो ज्ञाज्ञादिभेदो न घटते इति न, किंतु घटत एवेत्यर्थः।

१८४. शूद्राणामित्यादि; वाक्यार्थज्ञानमात्रान्मोक्षं ब्रुवतां मते शूद्रस्यापि वेदेतरलौकिकवाक्येन ज्ञानोदयसंभवात् अपशूद्राधिकरणसिद्धान्तो वृथेति भावः। आर्षव्याकृतिः,

बोधायनकृतविवरणम् ।

१८३. लक्ष्ये ब्रह्मणीत्यादि; "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥" इति श्रुतिरत्राभिप्रेता ।

(ग) दन्दशूकः, सर्पः ।

१८७. कृपानिधिपदाढ्यया स्वाख्यया; वरदरामानुज इत्याख्यया ।

१८९. आख्यासाम्येन वैभवसाम्येन च संभूतया भिया आचार्यस्य रामानुजस्यैव मठं प्राप्य अहंकारवर्जितः यः वरदरामानुजाख्यो व्यराजततरां तेनाराधितः सन् लक्ष्मणार्यो विरुरुचे इत्यर्थः ।

---

अथ सप्तमः स्तबकः ।

१. वेंकटभूमिभृत्, वेंकटाचलः ।

(ग) मातृष्वसेयः, मातृष्वसुरपत्यम् । अध्वन्यः पान्थः ।

४. स्वाभाविकेत्यादिना; "स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः । ब्रह्मा शिवः शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥" इति पद्येन । वश्च्युतं किं वास्ति; 'युष्माकं वस्तु किं च्युतं भवति' इति प्रपच्छ । अस्मदीयं वस्तु न तथा; न च्युतमित्यर्थः ।

(ग) एकमार्गस्य श्रीवैष्णवमार्गस्य । अकलङ्कतैव, दोषराहित्यमेव । केवलानाम्, अर्थरहितानाम् । स्वैरचारिणाम्; यथेच्छसंचारिणां युष्मादृशामित्यर्थः । तिर्यगूर्ध्वव्यवस्था; तिर्यक्पुण्ड्रम्, ऊर्ध्वपुण्ड्रमिति व्यवस्था ।

५. सर्वोत्तरोऽपि; सर्वेभ्यः श्रेष्ठोऽपि ।

६. वकुलाङ्कसूरिः, श्रीशठकोपमुनिः । विधेः नारायणादन्यस्य पूजनं नोचितमिति अर्थवतीं गाथाम् ।

८. फलोत्तरतरे; श्लाघ्यफलवति । वन्यन्तः; वनमध्ये, व्यर्थमिति यावत् ।

९. वृक्णः, छिन्नः ।

(ग) शैवधर्मः; रुद्राक्षमालाधारणादिरूपः पाशुपतधर्मः, शैवधनुश्च । वैष्णवधर्मः; पद्माक्षमालाधारणादिरूपः पाञ्चरात्रधर्मः, विष्णुधनुश्च । कालहस्तीश्वरः; कालहस्तिक्षेत्रपतिः, कालः कृष्णवर्णः हस्तीश्वर इति च । सत्यस्यानुकूल्यम्, सत्यभामाया आनुकूल्यमिति च ।

१२. मातुलः, मया लक्ष्म्या तुला साम्यं यस्य; मातुर्भ्राता च ।

१६. घटीयन्त्रम्; कूपादेर्जलाहरणायोपयुज्यमानं यन्त्रम् ।

१७. उपत्यका; अद्रेरासन्ना भूमिः ।

१९. पूर्णं श्रीशैलपूर्णम् ।

(ग) इन्दिरानिधेः, श्रीनिवासस्य । दर्वीकरः, सर्पः । पर्यङ्कविद्या, कौषितक्यांप्रसिद्धा ब्रह्मविद्या । वातंधयः, सर्पः ।

२० वंशाः, वेणवः ।

२३. देवेन्द्राश्म, इन्द्रनीलमणिः ।

२४. आरोहणं सोपानम् । कर्पूरकुल्या, तन्नाम्ना प्रसिद्धा कुल्या ।

२६. स्वमिसरः, स्वामिपुष्करिणी ।

२९. वार्धुषिकः, वृद्ध्याजीवः ।

३७. कावेर्यन्तःपुलिनभुवि, श्रीरङ्गक्षेत्रे ।

३८. अधित्यकायां पर्वतोर्ध्वभूमौ ।

३९. निजान्मातुलात्, श्रीशैलपूर्णात् ।

४०. कल्याणवल्ल्या, कनकवल्ल्याख्या महिष्या । हृत्तापघ्नम्; तन्नामकं तटाकम् । वीररामं, श्रीवीरराघवम् । शालिहोत्रः, कश्चित् ऋषिः ।

४२. विक्रीतायास्तु गोः को वितरति तृणमिति पाठः । गुरुविरहः, श्रीशैलपूर्णगुरोर्विरहः ।

४६. स्वाश्रमेण स्वनाम्ना च; संन्यासाश्रमेण रामानुजनाम्ना च ।

४८. मङ्क्षु, सपदि । एकां भिक्षाप्रदाने निरतां कस्यचित् गृहस्थस्य पत्नीम् ।

४९. बहिः मातेव वात्सल्यमभिनयन्ती ।

५०. सा, स्नुषेत्यर्थः ।

५१. तत्क्षयं तज्जन्तुनाशम् ।

(ग) गोष्ठीपूर्णः, तन्नामक आचार्यः ।

५४. (ग) देशिकचूडामणिः, कूरनाथः । श्रीवत्सचिह्न इति कूरनाथस्य स्वं नाम । जगत्प्राणो वायुः । शस्त्राणां संबन्धि शास्त्रम् । रामानुजो लक्ष्मणः । दाशरथिः, तन्नामा आचार्यः । श्रीवृत्तं नाम द्राविडप्रबन्धः 'तिरुविरुत्तम्' इति प्रसिद्धः ।

५७. श्रीरङ्गामृतदेशिकम्; तन्नामकं कंचित् भागवतम् ।

६४. यामुनाचार्यप्रथमाभीष्टम्; ब्रह्मसूत्राणां समीचीनार्थाविष्कारदक्षभाष्यकरणम् ।

———

अथाष्टमः स्तबकः ।

(ग) अपुंप्रभवतया, अपौरुषेयतया । तर्कस्याङ्गभूता ये संगतिविशेषाः पक्षधर्मतादयः तैः चारुतरवेषाम् । मङ्गलसूत्रम् 'अथातो ब्रह्मजिज्ञासा' इत्यारम्भसूत्रम् । अह्नाय शीघ्रम् । इक्षुरसास्वादः स्वत एव स्वादुतमः । तत्र यदि वेतनं दत्वा नियुज्यते, किन्नु वक्तव्यं तस्याङ्गीकार्यत्व इति भावः । पाटच्चराः तस्कराः, तैरपहृतधन इव । गङ्गायाः पारे, पारेगङ्गम् । एवं मध्येकवेरतनयम् ।

१. वृत्तिं बोधायनवृत्तिम् ।

३. (ग) टङ्कः, ब्रह्मनन्द्यपरनामा छान्दोग्योपनिषद्वाक्यकारः । द्रमिडः, तद्भाष्यकारः । गुहदेवः, तन्मतप्रवर्तक आचार्यः ।

९. कंजम्, कमलम् ।

११. शेषी रामानुजः, बलरामस्यानुजः श्रीकृष्णः । शेषः रामानुजः, आचार्यवर्योऽयम् । पूर्वः, शेषी रामानुजः; पार्थाय अर्जुनाय चरमार्थदः चरमश्लोकार्थदाता । अन्यस्तु शेषो रामानुजस्तु अपार्थाय परैः कल्पितायार्थाभासाय चरमार्थः नाशः तत्प्रदः ।

१२. सुमित्रायाः तदाख्यायाः दशरथमहिष्याः उदयः । सुमित्राणां सुहृदामुदयः । शेषत्वभाक् श्रीरामं प्रति शेषवृत्तिः, शेषावतारश्च । ऊर्मिलाख्यया देव्या अवरोधवान् भार्यावान्; ऊर्मीणां कामक्रोधादीनां षण्णामूर्मीणां, लयः, रलयोरभेदात् रयो वेगः, तस्यावरोधः प्रतिबन्धः, तद्वान् । रामायाः स्त्रियः अनुषङ्गे संबन्धे । रामस्यानुषङ्गे इति च ।

१३. एको रामानुजो लक्ष्मणः ज्येष्ठानुवर्ती मेघनादनिरोद्धा च । अन्यो रामानुजः श्रीकृष्णः यमुनायास्तीर्थसेवी । अयं

तृतीयो रामानुजस्तु ज्येष्ठानां महतामनुवर्तनशीलः, प्रतिवादिनां मेघसदृशाघोषनिरोद्धा, यामुनाख्यगुरुसेवी च। अतस्तृतीयोऽयं रामानुजः पूर्वाभ्यां द्वाभ्यां रामानुजाभ्यां पर उत्कृष्ट इत्यर्थः।

१४. शैवधर्मः; शैवं धनुः, पाशुपतधर्मश्च। वैष्णवधर्मः; वैष्णवं धनुः श्रीवैष्णवधर्मश्च। मायावादः; अविद्यावादः कपटवादश्च। खरः; क्रूरः, तन्नामको राक्षसश्च। एवं दूषणं परैः स्वमतोपरि आपादितं दूषणं तन्नामकं राक्षसं च। गां भूमिं त्रायत इति गोत्रो भूमिपो दशरथः तस्मादुदयः; गोत्रं वंशः, तस्मिन्नुदयः। कलिः पापं कलियुगश्च।

१५. त्रयो रामानुजाः—लक्ष्मणः श्रीकृष्णः आचार्यवर्यश्च। कवयोऽपि त्रयः—वाल्मीकिः व्यासः वेदान्तदेशिकश्च। ग्रन्था अपि त्रयः—रामायणं भारतं यतिराजसप्ततिश्च।

१६. अणिष्ठाम्, अल्पामित्यर्थः। ब्रह्मसूत्राणामाकलनमर्थविचारः। ब्रह्मसूत्रं यज्ञोपवीतम्।

१७. प्राग्भवीयघनकायः, शेषत्वावस्थायां भोगः।

१८. सत्त्वप्ररोहेत्यादि; श्वेतमृत्स्नया निर्मिता पुण्ड्रपङ्क्तिः सत्त्वप्ररोहनिवहतया वर्ण्यते शुभ्रवर्णत्वसाम्यात् विष्णुभक्तिकरत्वसाम्याच्च। धिनोति प्रीणयति।

१९. राजीवबीजं पद्माक्षम्। उभयोर्विभूत्योः, लीलानित्यविभूत्योः।

२०. नाथः, नाथमुनिः।

२१. धीवल्लीत्यादि; धीरेव वल्ली, तया परिवीताः ये शाखिनः तैत्तिरीयादिशाखाभेदवन्तो वेदाः, तेषां पटल्याः याः शाखाः, तासां शिखा उपनिषदः। द्विजाः, पक्षिणो विप्राश्च।

२२. आगमाः; वेदाः, आगमा वृक्षाश्च। श्रुत्याकर्षी, वेदालम्बी श्रोत्राकर्षकश्च। शुकः, तदाख्यो मुनिः कीरश्च। माधवः, रमापतिः वसन्तश्च।

२३. संतानकैः, वृक्षविशेषैः । उल्लोचः, वितानम् । क्रीडाहार्यं, कृत्रिमपर्वतम् ।

२७. श्रुतिरेवाधारशिला । सदध्वा ; नक्षत्रमार्गः आकाशः, सन्मार्गश्च । अयोध्यापुरीं; श्रीवैकुण्ठमित्यर्थः ।

२९. प्रणाली, कुल्या । द्युसरित्, गङ्गा । प्रतोली, वीथी । नराश्च हयाश्च रथाश्च तेषामुच्छ्रायजननी । नरहयो हयग्रीवो भगवान्, तस्य ये रथा निवासभूता विद्वांसः तेषामुच्छ्रायजननी । मुखाब्जस्य सरणिः, तन्निर्गता कृतिरित्यर्थः ।

३०. विवृतानि विस्तृतानि यानि दुर्मतानि मताभासाः ।

३१. त्रिवर्गः, धर्मार्थकामाः । एकदण्डिनां त्रयी, शङ्करभास्करयादवाः ।

३२. त्रियुगस्य, षाड्गुण्यवतो भगवतः । बलाध्यक्षः, सेनेशो विष्वक्सेनः । त्रिदण्डमेव वेत्रम् । अत्र "विष्वक्सेनो यतिपतिरभूत् वेत्रसारस्त्रिदण्डः" इति श्रीमन्निगमान्तमहादेशिकोक्तिरनुसृता ।

३३. श्रियः परिवृढम् एकमुखमीरयन् त्रयीशिखरभारतीनां गणो यथा गण इव सहस्रमुखभोगिराट् शेषः बहुमुखं बहुभिः मुखैः भाषते इत्यर्थः ।

३४. आजानसिद्धशेषत्वं जन्मसिद्धं शेषावतारत्वम् ।

३५. अनादिवाणी, आम्नायः । फणित्यं, द्राक्षा ।

३७. काशं, पुष्पविशेषः श्वेतवर्णः ।

३८. पुण्डरीकं, सिताम्भोजम् ।

३९. स्तम्बेरमो हस्ती ।

४०. हिक्का ; रोगविशेषः, येन मुखात् विकृतो ध्वनिरुदेति

(ग) करवालः, असिः । तत्त्वत्रयं, चिदचिदीश्वराख्यम् । स्वाचार्यपञ्चकं, महापूर्णगोष्ठीपूर्णश्रीशैलपूर्णमालाधररङ्गेशानामकमिति केचित् । अत्र रङ्गेशस्थाने यामुनाचार्यशिष्यं आलवन्दाराख्यं श्रीवेदान्तदेशिकोऽभिप्रैति । नूपुरापगा, तीर्थविशेषः । वनमहीधरः, क्षेत्रविशेषः । विष्णुचित्ततनयां, गोदाम् । तज्जनकं मुनिं, विष्णुचित्ताख्यम् । वकुलभूषणं श्रीशठकोपमुनिम् सरसालं कल्नकम् । श्रीमत्कुरुंकुटी, तिरुक्करुंकुटीतिप्रसिद्धं क्षेत्रम् । पञ्च पूर्णान्, पञ्च अर्चारूपिणः भगवतः । पटीशैलः, सह्याचलः ।

४१. वैष्णवी नदी, गङ्गा ।

४४. मम सख्यां, रामानुजः सन् श्रीकृष्णः यमुनायां चिरं चिक्रीडेति भावः । अथवा मम सख्यां, कावेर्याम् अयं रामानुजाचार्यश्चिरं चिक्रीडेति भावः ।

४७. (ग) मायावादः, अद्वैतवादः । कप्यासवाचः "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्युपनिषद्वाक्यस्य । शंकरदुरर्थः; कपेर्मर्कटस्य जघनमिव स्थितं पुण्डरीकमित्यर्थः ।

४६. राज्ञा कर्त्रा मुद्रया करणेन घटयित्वेत्यन्वयः ।

४९. (ग) धरित्रीगीर्वाणाः, भूसुराः ब्राह्मणा इत्यर्थः ।

५०. रामाभिख्याम्; श्रीरामनाम । मार्गदर्शी; मोक्षमार्गदर्शी । "श्रीराम राम रामेति रमे रामे मनोरमे । सहस्रनामतस्तुल्यं रामनाम वरानने ।" इत्युक्तरीत्या श्रीरामनाम तारकमन्त्रमुपदिशन् इत्यर्थः ।

५१. स्वाटाः, देवाः ।

५३. पारेगङ्गं, गङ्गायाः पारे । अकृष्टपच्यम्, अकृष्टे स्वयमेव पच्यत इति अकृष्टपच्यम् । "राजसूयसूर्य" इत्यादिना क्यबन्तो निपातितः । सदातनफलं मोक्षः ।

५६. (ग) गण्डकी, तन्नामिका नदी । अनन्तमतं, श्रीवैष्णवमतम् ।

५७ आचक्रवालं, लोकालोकपर्यन्तम् ।

५८. सततवर्षिणि, सतीति शेषः ।

(ग) उत्तमपूर्णः तदाख्यो भक्तः ।

५९. प्रसादमहत्त्वतः, श्रीरङ्गनाथानुग्रहलब्धगुडान्नभक्षणमहत्त्वतः । गोविन्दः, तदाख्य आचार्यः । व्यास इति पराशर इति च नामाकरोत् ।

६०. महिताभीष्टद्वयीपूरणम्; शारीरकसूत्राणां श्रीभाष्यकरणं प्रथमम्, व्यासपराशरनामकरणेन द्वितीयमित्यभीष्टद्वयं पूरितम् । तृतीयामपि; गोविन्दावरजपुत्रस्य पराङ्कुश इति श्रीशठकोपनामकरणेन तृतीयमभीष्टं पूरितमिति भावः ।

---

अथ नवमः स्तबकः

श्लो. १. लम्पटः, स्पृहयालुः । आगमप्रामाण्यमनभ्युपगम्य सर्वत्र 'कुतः कुतः' इति ये केवलं हेतुवादमवलम्बन्ते ते कौतस्कुताः "कस्कादिषु च" इति सत्वम् ।

२. द्वादशसहस्रैर्भक्तैः, सप्तशतसंख्याकैर्यतिभिः, चतुरधिकसप्ततिसंख्याकैराचार्यपुरुषैश्च यतिपतिर्वृतोऽभूदित्यर्थः ।

३. गोविन्दसंदूषकः, भगवति श्रीपतौ द्वेषमावहन् । अन्ततः कुण्ठीभवता प्रयत्नेन युक्तः ।

५. चातुर्ग्रामी ; तदाख्यः राजपुरोहितः । न्यक्क्रिया, अनादरः । तव छन्दानुरोधात् ; तवाभिप्रायमनुरुध्य ।

६. शठमतेः, पुरोहितस्य वचनम् ।

७. (ग) द्रोणमस्ति ; द्रोणमिति शिवाख्यात् परिमाणात् अधिकः परिमाणविशेः । निशमनं, श्रवणम् ।

१२ हेतिवरस्य, सुदर्शनस्य ।

१३ मधूलीत्यादि ; प्रतीच्यां दिशि वर्तमानस्य पर्वतविशेषस्य नाम ।

१५. नल्लानाख्यार्यः, 'तिरुमलै नल्लान्' इति नाम्ना प्रसिद्धः चतुःसप्ततिसंख्याकेषु श्रीरामानुजशिष्येषु आचार्यपुरुषेषु श्रीभाष्यसिंहासनाधिपतिषु एकः । तस्य शिष्योऽहमिति निषादो जगादेत्यर्थः ।

१६. वन्येन, फलमूलादिना ।

१७. साधुसरिताम्, स्वभक्तामिति शेषः ।

१८. भगवन्निवेदनविधिः, भगवते अनिवेदितस्यान्नस्याभोज्यत्वात् 'त्वद्भवने किं भगवद्विग्रहो वर्तते ? किं त्वया तस्मै इदमन्नं निवेदितम्' इति पप्रच्छेत्यर्थः ।

१९. परं दैवं, श्रीरामानुजपादुकाद्वयरूपम् । तत् पादुकाद्वयं नैजपदयोः संयोज्य सुश्लिष्टतया 'स्वकीयमेवेदं पादुकाद्वयं भक्तयानया संरक्षितं प्रतिदिनमाराध्यते' इति मत्वा भक्तान् भोजनाय समाज्ञापयदित्यर्थः ।

२२. घट्टभूमिः ; पर्वतसमीपे विद्यमाना भूमिः ।

२३. स्वभक्तः ; विट्ठलदेवरायः, तस्य पुरम् ।

२४. (ग) सालग्रामे ; तदाख्ये ग्रामे । दाशरथिः, श्रीरामानुजस्य पूर्वाश्रमे भागिनेयः, तच्छिष्येष्वन्यतमश्च । छिपश्वाशन्नाम्ना प्रसिद्धान् । रामप्रियः, उत्सवमूर्तेर्नाम । संपत्कुमार इत्यपि तस्य नाम ।

---

अथ दशमः स्तबकः ।

श्लो. १. श्रीपदसंगतिम् ; 'श्री' इति पदसंयोगम् । नारायणपुरीं, श्रीनारायणपुरीमित्यर्थः । तस्मिन्, यदुक्षोणीभृदीशे श्रीरामप्रिये इत्यर्थः ।

२. स्मारं स्मारम्, पुनः पुनः स्मृत्वेत्यर्थः ।

(ग) प्रसूनसायको मन्मथः ; तस्य सायकाः बाणाः पुष्पाणीत्यर्थः । संचरमाणः, ताच्छील्ये चानश् । निजरामणः, रामप्रियः ।

३. शृङ्गारवनी ; लीलोद्यानम् ।

४. कान्तसंगतिपरैः पक्षिमृगादिभिराक्रान्ते । हा नाथेत्यादि ; संततध्यानमहिम्ना सर्वमपि चराचरात्मकं वस्तु रामप्रियमेव पश्यन्ती तं कान्तान्तरसंगतमजानादित्यर्थः ।

६ पञ्चेषुं, मन्मथम् । बाणासं, चापम् । कनदिक्षुरूपम्, प्रकाशमानेक्षुमयम् ।

८. चन्द्रहासः, खड्गः ।

९. मुनिगणे ; विश्वामित्रादौ । पान्थे, पथिके ।

१०. जनकः, विष्णुः । मीलितदृक्, क्षीरोदधौ निद्राति । मातुलः, चन्द्रः । जननी, लक्ष्मीः ।

११. भवतोः, हिमकरमलयपवनयोः ।

१४ स्वान्तजः, मनोभूः ।

२१. सरसायाम् अमृतकृतस्तुतौ कृतौत्सुक्यम् ।

२२. हन्ता, निहन्ता ।

२५. वाहिनीविभुः, सेनेशः विष्वक्सेनः ।

२६. सूत्रवतीसखेन, विष्वक्सेनेन ।

२९. फणियतिराजः, श्रीरामानुजः ।

३४. वाचामसीमा ; वाचामविषयः । अब्जभवनावासं, लक्ष्मीनिवासम् ।

(ग) निचुलापुरीपरिवृढः. कश्चित् चोलराजः ।

३८. अभियातिः, शत्रुः ।

३९. स्वं सुतम्, स्वस्यात्मजं द्वितीयकुलोत्तुङ्गनामकम् ।

४१. मन्त्ररत्नम्, द्वयनाम्ना प्रसिद्धं मन्त्रविशेषम् ।

४४ कल्याणतटिनी, कल्याणपुष्करिणी ।

४७. अत्रैव, श्रीरङ्ग एव ।

४९. चोलेन्द्रः, द्वितीयकुलोत्तुङ्गः ।

५५. (ग) चातुर्ग्राम्युज्जीवनाय ; 'आचार्यभक्तिप्रवणेन मया-लभ्यां संपदं चातुर्ग्राम्यपि लभताम्' इति विज्ञापयामास। मन्दहासमङ्कूरयामास, स्वापकारपरेऽपि तस्मिन्नदसीयां शुभां मतिमनुसंधाय तद्वरप्रदानसूचकं मन्दस्मितं चकारेत्यर्थः ।

६०. (ग) गद्येनानेन पूर्वं विस्तरेणोक्तं श्रीरामानुजचरितं संग्रहेणाह । समुत्तारणकृते, समुत्तारणाय । मायिनं, मायावादिनम् । अभीष्टत्रयी ; श्रीभाष्यकरणं प्रथमं, कूरनाथसुतयोः व्यासपराशराख्यनामकरणं द्वितीयं, गोविन्दानु-

जात्मजस्य परङ्कुशाख्यनामकरणं तृतीयमिति त्रिविधमभीष्टं पूर्वमेवोक्तम् । भारतसंपराय-न्यायेन, अष्टादशसु दिनेषु प्रवर्तितेन वादेनेत्यर्थः ।

६१. प्रालेयाहार्यः, हिमाद्रिः ।

---

इत्थं श्रीभाष्यकृत्प्रख्यरामानुजमुनीशितुः ।
चरिते दुरितव्रातपरासनपटीयसि ॥

टिप्पणं तद्गुरूत्तंसपदपङ्केरुहालिना ।
श्रीशैलनल्लान्वंश्येन रचितं कृष्णसूरिणा ॥

---

A.

## AGENTS FOR THE SALE OF MADRAS GOVERNMENT PUBLICATIONS.

### IN INDIA.

NEW BOOK COMPANY, Booksellers, etc., "Kitab Mahal," 188-90, Hornby Road, Bombay.

D. B. TARAPOREVALA SONS & Co., Bombay.

THACKER & Co. (LTD.), Bombay.

N. S. WAGLE, Circulating Agent and Bookseller, No. 6, Tribhuvan Road, Girgaon, Bombay.

THE BOOK COMPANY, Calcutta.

BUTTERWORTH & Co. (LTD.), 6, Hastings Street, Calcutta.

R. CAMBRAY & Co., Calcutta.

THACKER, SPINK & Co., 3, Esplanade East, Calcutta.

K. KRISHNA AYYAR BROTHERS, Booksellers, Publishers, etc., The Round, Trichur (Cochin State).

The Manager, THE HYDERABAD BOOK DEPOT, Hyderabad (Deccan).

M. R. APPADURAI, Bookseller, 57-A, Anderson Street, Esplanade, Madras.

THE CHRISTIAN LITERATURE SOCIETY FOR INDIA, Post Box No. 501, Park Town, Madras.

CITY BOOK COMPANY, Post Box No. 283, Madras.

C. COOMARASWAMI NAYUDU AND SONS, 27 and 35, Chinnathambi Street, Madras.

HIGGINBOTHAMS (LTD.), Mount Road, Madras.

G. A. NATESAN & Co., Madras.

V. RAMASWAMI SASTRULU & SONS, 292, Esplanade, Madras.

P. VARADACHARI & Co., Booksellers, 8, Linghi Chetti Street, Madras.

Agent, THE SOUTH INDIA SAIVA-SIDDHANTA WORKS PUBLISHING SOCIETY, LTD., 6, Coral Merchant Street, Madras.

VENKATRAMA & Co., Educational Publishers and Booksellers, Esplanade, Georgetown, Madras.

THE LITTLE FLOWER COMPANY, Educational Publishers and Booksellers, 56, Thambu Chetti Street, Georgetown, Madras, E.

The DECCAN PUBLISHING House, Huzur Road, Calicut (Madras).

THE EDUCATIONAL SUPPLIES Co., 142-A, Ponnurangam Street, R.S. Puram, Coimbatore (Madras).

Secretary, RAJAJI STATIONERY DEPOT, Devakottai (Madras).

E. M. GOPALAKRISHNA KONE, Pudumantapam, Madura (Madras).

K. BHOJA RAO & Co., Booksellers, Kodialbail, Mangalore (Madras).

M. SESHACHALAM & Co., Proprietors, The Hindu Press, Masulipatam (Madras).

B. VENKATARAMAN, Correspondent, Permanent Fund Buildings, Neela South Street, Negapatam (Madras).

D. SRI KRISHNAMURTI, Editor of "Grama Paripalana," Ongole (Madras).

THE HINDUSTAN PUBLISHING Co., LTD., Rajahmundry (Madras).

THE MODERN STORES, Salem (Madras).

The Proprietor, THE HOUSE OF KNOWLEDGE, Booksellers and Publishers, Palliagraharam P.O., Tanjore (Madras).

SIVAGAMI PUBLISHING HOUSE, Booksellers and Publishers, Srivaikuntam, Tinnevelly, (Madras).

S. KRISHNASWAMI & Co., Teppakulam Post, Trichinopoly Fort (Madras).

L. VAIDYANATHA AYYAR, Law Bookseller, Teppakulam P.O., Trichinopoly (Madras).

A. VENKATASUBBAN, Law Bookseller, Vellore (Madras).

BHAWNANI & SONS, Booksellers, etc., Connaught Place, New Delhi.

The Manager, THE INTERNATIONAL BOOK SERVICE, Booksellers, Publishers, News Agents and Stationers, Poona 4.

P. N. SWAMINATHA SIVAN & Co., Commission Agents, Booksellers, etc., Pudukkottai State. (Branches also at Karaikudi and Devakottai.)

The Proprietor, THE PUNJAB SANSKRIT BOOK DEPOT, Saidmitha Street, Lahore (Punjab).

MOHANLAL DOSSABHAI SHAH, Books Agent, etc., Rajkot.

B. S. MATHUR & Co., Chatur Vilas, Paota Civil Lines, Jodhpur (Rajputana).

THE BOOKLOVERS' RESORT, Booksellers and News Agents, Taikad, Trivandrum.

---

### NOTICE.

*Official publications may be obtained in the United Kingdom either direct from the office of the High Commissioner for India, India House, Aldwych, London, W.C. 2, or through any bookseller.*